# AMEYA-RATNAVALĪ

ary treatise on Vaishnava philosophy of Bengal")

OF

ADEVA VIDYĀBHŪSHAṆA

I AN OLD COMMENTARY KANTIMĀLĀ, AND A NEW
L COMMENTARY AND BENGALI TRASLATION.

BY

**SHAYA KUMAR SHASTRI**

*Bengali Translation of Vedāntadars'ana,*
*Upades'asahasrī etc. etc.*

REVISED BY

**RSUNDARA BHAGAVATADARSHANACHARYA**

PUBLISHED BY

SANSKRIT SAHITYA PARISHAT.

*Shyambazar, Calcutta.*

**Price** { *for members* 1/0/-
*for others* 1/4/-

# प्रमेयरत्नावली

( गौड़ीयवैष्णवदर्शनप्रकरणग्रन्थः )

## बलदेवविद्याभूषणविरचिता

कृष्णदेववेदान्तवागीशविरचित-कान्तिमालाख्यटीकोपेता

प्रभाख्यनवीनटीकया वङ्गानुवादेन च समलङ्कृत्य उपदेशसहस्री-
वेदान्तदर्शनादि-विविधग्रन्थसम्पादयित्रा काव्य-
सांख्य-वेदान्त-मीमांसा-सर्वदर्शनतीर्थ-
विद्यारत्नोपनाम-भारद्वाज—

**श्रीमद्-अक्षयकुमारशर्मशास्त्रिणा**

सम्पादिता

वैष्णवदर्शननिष्णात-
श्रीमद्गौरसुन्दरशर्म-भागवतदर्शनाचार्येण परिदृष्टा
संस्कृतसाहित्यपरिषदा प्रकाशिता ।

---

मूल्यं सपादरूप्यकम् ।    सदस्यानां रूप्यकमात्रम् ।




# উৎসর্গপত্র

এই গ্রন্থ

স্বনামপ্রসিদ্ধ ভগবদ্‌ভক্ত

পরলোকগত

৺ভূপেন্দ্রনাথ বসু এম্. এ., বি-এল্

মহোদয়ের নামে

উৎসৃষ্ট হইল।

Swami ... Narayan

# FOREWORD

The literature of the Vaishnavas in Bengal is very scanty so far as books composed in Sanskrit are concerned. The works on philosophy can be counted on fingers' ends. The present work is one of them. It is an elementary treatise representing the tenets of the school of Sri Chaitanya-Deva, which, though founded on the doctrines of the Madhva school of Vedanta philosophy, is peculiar in many respects. Its author is Baladeva Vidyabhushana. To him several other books are ascribed. He is a prominent figure amongst the Vaishnava philosophers and flourished about three hundred and fifty years ago. There is a commentary on the work, called Kantimala. Its author styles himself 'Vedantavagisha' who is generally identified with one Krishnadeva Vedantavagisa.

As there is no good edition of this important Vaishnava work available, the Sanskrit Sahitya Parishat undertook to publish it together with Kantimala. The editor has added to it a new commentary of his own containing, references etc. Besides, the purport of every paragraph has been given in Bengali for the benefit of Bengali readers.

It is hoped that this publication will interest all students of Indian philosophy.

P. Shastri
*Jt, Secretary,*
*Sanskrit Sahitya Parishat.*

*April, 1927.*

# भूमिका

श्रीभगवतो वासुदेवस्याऽनुकम्पया कान्तिमालाख्यया प्राचीन-टीकया समन्विता प्रभया समुद्भासिता वङ्गानुवादेन च समलङ्कृता श्रीमद्बलदेवविद्याभूषणविरचिता गौड़ीयवैष्णवदर्शनसारभूता रत्नावलिरिव प्रमेयरत्नावली साम्प्रतं प्रकाशतां नीता। परं स्वल्पविद्येनापि मया मासेनैकेन विरचितौ प्रभाभिधा काचन टीका वङ्गानुवादश्च।

भगवत्पूज्यपादजगद्गुरुशङ्कराचार्यमतमवलम्बमानानां तन्मतं सादरमातिष्ठमानानामस्मादृशां कदाचित् पक्षपातो भवेत् सिद्धान्त-हानिर्वा घटेतेति गौड़ीयवैष्णवमतं सेवमानः परमभागवतः कश्चन परीक्षकत्वेनाऽपेक्षणीय इति सुनिपुणं समीक्ष्याऽन्ते तादृशः कश्चित् समासादितः। स खलु प्रायेण सर्वेषां विदुषां परिचितः स्वर्गगतनैयायिकवर्यानन्दचन्द्रसार्वभौमभट्टाचार्यात्मजो वैष्णवशास्त्रपारावारपारीण-विविधवैष्णवग्रन्थप्रकाशक-स्वधामगत-सिद्धान्तवाचस्पति-प्रभुपाद-श्यामलालगोस्वामिशिष्यः साधकप्रवरो निखिलशास्त्रविशारदो गौड़ीयवैष्णवमतनिष्णातः श्रीयुतगौरसुन्दरभागवतदर्शनाचार्यमहाशयो नाम। तस्य च महात्मनः सङ्गेन तद्गुणपरम्परापरिशीलनेन तत्पाण्डित्य-चारित्रावलोकनेन विनयमधुरव्यवहारेण च नितरामानन्दपाथोनिधौ निमग्नोऽभूवम्। मासषट्केन च मत्कृतां प्रभाभिधां टीकां वङ्गानुवादञ्च समालोच्य बहुषु स्थलेषु पूर्तिः सम्पादिता, कुत्रचिदंशविशेषश्च परिहृतः। सर्वथा तदुपासनाफलमेतदिति सुधीभिर्निर्मत्सरैर्भवितव्यम्।

## आदर्शग्रन्थपरिचयः

ग्रन्थोऽयं प्राक् स्वधामगतप्रभुपादगोकुलचन्द्रगोस्वामिमहाशयेन कान्तिमालया विस्तृतवङ्गानुवादेन चोपेतः १२८४ वङ्गाब्दे प्रकाशितः। तेन खलु महात्मना एष ग्रन्थो महता प्रयासेन प्रथमं प्रकाशित इति स सादरमभ्यर्थ्यते। स च साम्प्रतं नैव लभ्यत इति तत्प्रकाशने सम्यगायासः क्रियते। ग्रन्थप्रकाशे यतमानानामस्माकं लोचनविषयतां गतो गौड़ीयवैष्णवमठतः प्रकाशितः कान्तिमालाख्यटीका वङ्गानुवादोपेतः प्रमेयरत्नावलीनामधेयः कश्चिद् ग्रन्थः। मुद्रणकाले कलिकातास्थ-एसियाटिक्सोसाइटिभवनाल्लब्धः कान्तिमालाख्यटीकोपेतो नागराक्षरान्वितो हस्तलिखितः कश्चिदपरो ग्रन्थः। अथ प्रभुपादश्रीमदतुलकृष्णगोस्वामिमहाशयसम्पादितोऽन्योऽपि कश्चिदासादितः। यथाक्रमं पुस्तकचतुष्टयं 'क' 'ख' 'ग' 'घ' इति नाम्नाऽस्मदीयपुस्तके सङ्केतितम्।

न्यायवैशेषिकमतं जिज्ञासूनां विश्वनाथन्यायपञ्चाननकृतमुक्तावलीसमन्वितभाषापरिच्छेद इवाऽद्वैततत्त्वं प्रविविक्षूणां सदानन्दयतिकृतवेदान्तसार इव सर्वथेयं प्रमेयरत्नावली गौड़ीयवैष्णवमतं जिज्ञासूनां श्रेयसे प्रभवति।

अत्र च ग्रन्थकृता नव प्रमेयाणि प्रतिपादितानि। तानि च विस्तरेणात्र वर्तन्त इति तत्र विरम्यते।

## ग्रन्थकृत्परिचयः

ग्रन्थकृदयं वङ्गविभूषणो बलदेवविद्याभूषणो जन्मना वङ्गीयब्राह्मणकुलमलञ्चकार। प्रथमे वयसि वर्तमानः स स्वदेशे काव्य-

व्याकरणालङ्कारधर्मशास्त्राणि तथा माध्वसम्प्रदायाद्दर्शनशास्त्राण्यधीत्य श्रीवृन्दावनधाम समासाद्य तत्रत्यश्रीमद्विश्वनाथचक्रवर्त्तिनः शिष्यत्वमङ्गीकृत्य ततो भक्तिशास्त्रं शुश्राव। उपनिषदः, ब्रह्मसूत्रं श्रीमद्भगवद्गी ता चेति प्रस्थानत्रयम्, एतद्भाष्यकारो हि ब्राह्मण आचार्यपदवीं लभते। श्रीकृष्णचैतन्यसम्प्रदाये तद्विधः कश्चित् पुरुषधौरेयो नास्तीति श्रीवृन्दावने समवेतैः पण्डितप्रकाण्डैर्नाङ्गीकृतोऽयं सम्प्रदायः सनातनत्वेन। महाप्रभुश्रीकृष्णचैतन्यस्तन्मतावलम्बिनश्च श्रीमद्भागवतमेव ब्रह्मसूत्रभाष्यमिति मन्यमाना नान्यद् भाष्यं विरचितवन्तः। तथापि नैतद्भाष्यलक्षणाक्रान्तमिति ब्रुवाणा अन्ये सम्प्रदाया नाद्रियन्त मतमेतदिति वृन्दावनस्थभगवद्गोविन्दनिदेशेन एकेनैव मासेन श्रीमद्बलदेवः प्रणिनाय भाष्यमेकं ब्रह्मसूत्रस्य, अतस्तद् गोविन्दभाष्यमिति व्यपदिश्यते।

## बलदेवप्रणीता ग्रन्थाः

अधोलिखितास्तत्कृता ग्रन्थाः साम्प्रतं समुपलभ्यन्ते—

१। गोविन्दभाष्यम्।
२। गोविन्दभाष्यटीका।
३। श्रीमद्भगवद्गीताभाष्यम्।
४। उपनिषद्भाष्यम्।
५। भाष्यपीठकं सिद्धान्तरत्नं वा।
६। सिद्धान्तरत्नटीका।
७। वेदान्तस्यमन्तकम्।
८। प्रमेयरत्नावली।
९। श्रीमद्भागवतटीका।
१०। विष्णुसहस्रनामभाष्यम्।
११। स्तवमालाभाष्यम्।
१२। लघुभागवतामृतटीका।
१३। षट्सन्दर्भटीका।
१४। साहित्यकौमुदी।
१५। गोपालतापनीयभाष्यम्।
१६। छन्दःकौस्तुभभाष्यम्।

अधोलिखितास्तत्प्रणीता ग्रन्था अस्माभिरनुपलब्धाः सन्तीति कश्चिद् भाषते—

१। सिद्धान्तदर्पणः।
२। काव्यकौस्तुभः।
३। चन्द्रालोकटीका।
४। नाटकचन्द्रिकाटीका।
५। व्याकरणकौमुदी।

अन्ये च तत्प्रणीता ग्रन्थाः सन्ति न वेति निर्णेतुं नैव शक्यते।

गौड़ीयवैष्णवदर्शनमहामहीरुहस्य वीजमुप्तं भगवता श्रीकृष्ण-चैतन्यचन्द्रेण। स च महीरुहोऽङ्कुरितः पल्लवितश्च श्रीरूपसनातनाभ्यां, श्रीमज्जीवेन कुसुमितः फलितश्च, विश्वनाथबलदेवाभ्यामभिवर्द्धितः।

अनर्घ्यं खलु रत्नमिह जगति प्रादुरभूद् गौड़ीयवैष्णवदर्शनं नाम। एतदेव रत्नं वङ्गदेशवासिनां निजस्वमिति तत्रैतद्देशीयैर्महान् समादरो विधेयः। भक्तेः प्रपञ्चोऽस्मिन् मते यादृगुपलभ्यते, न तथान्यत्र कुत्रचित्।

## बलदेवस्य वैश्यत्वनिरासः

कश्चिद् वर्णयति—श्रीमद् बलदेवविद्याभूषणो वैश्यकुले जन्म परिगृह्य कान्यकुब्जवासिनः विप्रवंशावतंसात् कस्माच्चिद् वैष्णवाद् दीक्षितो ब्राह्मणत्वमगात्। वृत्तब्राह्मणात् शौक्रब्राह्मणाः समुपजायन्त इति श्रुतिस्मृतिविदो वदन्तीति। सर्वथा मतमेतदुन्मत्तप्रलपितमिति सततं प्रेक्षावद्भिरुपेक्षणीयम्। न खलु कश्चिदिह जन्मनि महता तपसा जात्यन्तरमधिगन्तुमर्हति, शास्त्रे यत्र कुत्रचिदेतादृशो वचनाभासः परिलक्ष्यते, स तपोमाहात्म्यप्रख्यापकार्थमादरूप इति न विस्मर्तव्यम्। 'सवर्णायां संस्कृतायां स्वयमौरसं विद्यात्' इति स्मरणाद् वृत्तेनान्यो वर्णो ब्राह्मणत्वमधिगन्तुं न शक्नोति। लब्धसत्ताकस्यैव वर्णस्य वृत्तं प्राशस्त्यमापादयति, न तु तद् वर्णत्वप्रयोजकम्।

इदानीन्तना ये केचन नास्तिक्यवादमासेवमाना अर्थकामावेव पुरुषार्थं मन्यमानाः सनातनसत्समाजाद् दूरे वर्तमानाः सामाजिकैः कथंकारमुपेक्ष्यमाणा भूदेवप्राधान्यमसहमाना यां काञ्चन जातिमुपनीय ब्राह्मणत्वमापादयन्तो हन्त ब्राह्मणचरणरजोलाभेऽक्षमाः प्रतिदिनमवनतेरधः सोपानमवतरन्तीति ब्राह्मणास्तान् दयन्ताम्। न खलु ब्राह्मणेतरो नरः कोऽप्यद्यापि आचार्यपदवीमधिगच्छतीति श्रूयते। ग्रन्थकृतो भाषणादपि ब्राह्मणत्वं स्फुटमवगम्यते। तदुक्तं सिद्धान्तरत्ने—

'गजपतिरनुकम्पासम्पदा यस्य सद्यः
समजनि निरवद्यः सान्द्रमानन्दमृच्छन्।
निवसतु मम तस्मिन् कृष्णचैतन्यरूपे
मतिरतिमधुरिम्णा दीप्यमाने मुरारौ॥' इति।

अस्य टीकायां ग्रन्थकृदुक्तिर्यथा—

'कृष्णचैतन्यरूपे शचीसुतात्मनि। मुरारौ कृष्णे। पक्षे परेशतया कृष्णे[illegible]र्थं निरूपयति मुरारौ तन्नामके स्वपूर्वचतुर्थे।' अनेन ग्रन्थकृद्वाक्येनावगम्यते मुरारिरस्य पूर्वचतुर्थपुरुष इति मुरारेर्ब्राह्मणत्वे न केऽपि विवदन्ते प्रेक्षावन्तः। 'रसिकानन्दमुरारिस्तु भाष्यकृतः पाञ्चरात्रिकगुरुपारम्पर्येण पूर्वचतुर्थपुरुषः' इति भाषणन्तु हेयम्। न खलु कश्चिद् गृही स्वपूर्वपुरुषपरिचयमवर्णयित्वा स्वगुरुपूर्वचतुर्थपुरुषं वर्णयति, न वा कश्चित् परिव्राड् गुरुमनुल्लिख्य गुरुवंशीयचतुर्थपुरुषनाम स्मरति, सदाचारविरोधात्। अन्यदपि वचनं तस्य ब्राह्मणत्वं स्फुटमवगमयति। तदुक्तं ग्रन्थकृता स्वकृतब्रह्मसूत्रभाष्येऽपशूद्राधिकरणे—

'इह भवति संशयः—वेदविद्यायां शूद्रोऽधिक्रियते न वेति? तत्र मनुष्याधिकारोक्तेरविशेषात् सामर्थ्यादिसत्त्वात् शूद्रेति श्रौतलिङ्गात् पुराणादिषु विदुरादीनां ब्रह्मवित्त्वदर्शनाच्च सोऽधिक्रियत इति प्राप्ते—

'शुगस्य तदनादरश्रवणात्तदाद्रवणात् सूच्यते हि॥' १।३।२४

नेत्यनुवर्तते। तस्यां शूद्रो नाधिक्रियते। कुतः? हि यस्मात् पौत्रायणस्य जानश्रुतेरब्रह्मज्ञस्य "कम्बर एनमेतत् सन्तं सयुग्वानमिव रैक्वमात्थे"ति हंसोक्तानादरवाक्यश्रवणात्तदा ब्रह्मज्ञं रैक्वं प्रत्याद्रवणात् शुक् सञ्जातेति सूच्यतेऽस्यामाख्यायिकायां, तथा च शोकयोगादेवा-शूद्रेऽपि तस्मिन् शूद्रेति सम्बोधनं स्वसार्वज्ञ्यविज्ञापनायैव, न तु चतुर्थ-वर्णत्वादिति।'

'संस्कारपरामर्शात्तदभावाभिलापाच्च।' १।३।३६। श्रुत्यन्तरे "ऽष्ट-वर्षं ब्राह्मणमुपनयीत तमध्यापयेदेकादशे क्षत्रियं द्वादशे वैश्य"मित्य-ध्यापनाय संस्कारविमर्शनात्तत्र **ब्राह्मणानामेवाधिकारः।** 'नाग्निर्न यज्ञो न क्रिया न संस्कारो न व्रतानि शूद्रस्ये'ति संस्कारा-भावकथनाच्च शूद्रस्य नाधिकारः, त्रैवर्णिकबाह्यस्य संस्काराविधानात् संस्कारसापेक्षे वेदपाठे तस्य न सः।' इत्यादिग्रन्थकृदुक्तेरवगम्यते स ब्राह्मणकुलोत्पन्न इति। 'ब्राह्मणानामेवाधिकारः' इति भाषणन्तु अब्राह्मणे कथमपि न सम्भवति। कथं स वैश्यः सन् स्वाधिकारमपे-क्षत्याचार्यपदवीं गृहीत्वाऽध्यापयेत्। न खलु कश्चिदनुन्मत्त एवं भाषितुमुत्सहते। अतस्तेषां दैवब्राह्मण-शौक्रब्राह्मण-वृत्तब्राह्मणादि-प्रलापोक्तिरपास्ता।

"सर्वत्राऽस्खलितादेशः सप्तलोकैकदण्डधृक्।
अन्यत्र ब्राह्मणकुलादन्यत्राच्युतगोत्रतः॥" इति

श्रीभागवतवचनमुत्पत्त्यैव ब्राह्मणत्वादिकमिति प्रतिपादयति। स्वकृत-वेदान्तस्यमन्तके विप्रपदमप्यस्य ब्राह्मणत्वमुपोद्बलयति।

## शाङ्करमतेन सहास्य पार्थक्यम्

भगवन्तः श्रीशङ्कराचार्या हि निर्गुणं ब्रह्माङ्गीकुर्वन्ति, श्रीजीव-गोस्वामिपादास्तु ब्रह्मणः स्वरूपशक्तिं मन्यन्ते। सच्चिदानन्दस्वरूपस्य

ब्रह्मणो विशेषणीभूता सन्धिनी-संविद्-ह्लादिनीरूपा स्वरूपशक्तिः। एतन्मते ब्रह्मसाक्षात्कारादनन्तरं स्वरूपशक्तिवैचित्र्यविशिष्टो भगवत्-साक्षात्कारो भवति। शङ्करो हि भगवान् शुद्धज्ञानवादी, स तु कर्मसमुच्चितं ज्ञानं नाधिगच्छति; एतन्मतेऽपि कर्माद्यमिश्रिता शुद्धा भक्तिरेवाङ्गीक्रियते।

## रामानुजमतेन सह पार्थक्यम्

रामानुजा जीवन्मुक्तिं नाभ्युपगच्छन्ति, एते तु शङ्करमतवत् तामुपाददते। ते ज्ञानकर्मसमुच्चयवादिनः, एते तु न तथा। यथा हि रामानुजा चिदचिद्विशिष्टं ब्रह्म मन्यन्ते, एतेऽपि शक्तित्रयविशिष्टं परतत्त्वमुररीकुर्वन्ति।

## माध्वमतेन सह पार्थक्यम्

माध्वा हि द्वैतवादिनः। ते जीवस्यास्वातन्त्र्यमणुत्वञ्च, ईश्वरस्य स्वातन्त्र्यं विभुत्वञ्च स्वीकुर्वन्ति, एतेऽपि तथा। जीवेश्वरयोस्तु नात्यन्त-भेदमाद्रियन्ते, शक्तिशक्तिमतोरभेदादेव। भगवान् श्रीकृष्णचैतन्यः सम्प्रदायरक्षणार्थं माध्वसम्प्रदायाद् दीक्षितो बभूव। अत एते माध्वमतावलम्बिन इत्यभिधीयन्ते। वस्तुतस्तु स्वतन्त्रोऽयं वादः। अस्य वेदानुसारित्वं सनातनत्वञ्चावगम्येते पुराणादिषु। माध्वमते विष्णोरुपास्यत्वं लक्ष्म्यास्तु जीवकोटित्वम्, एतन्मते लक्ष्मीरञ्जित-वामांशः श्रीभगवान्, इति साध्यांशे भेदः। साधनांशेऽपि तथा। माध्वमते कर्ममिश्रभक्त्या भगवत्सान्निध्यलाभः, एतन्मते तु निर्गुणा-पर्यायशुद्धभक्त्या विचित्रलीलादिविशिष्टभगवत्सेवाप्राप्तिः। माध्व-मते भक्तेषु विप्रभक्तानामेव मोक्षः, एतन्मते भक्तमात्राणामेव भगवत्-साक्षात्काररूपा मुक्तिः। माध्वमते तप्तमुद्राधारणम्, एतन्मते चन्द-नादिना मुद्राधारणम्। माध्वरामानुजमते ऐश्वर्यप्रधानभक्तेः प्राधान्यम्,

एतन्मते माधुर्यप्रधानभक्तेरेव। माध्वमते भक्तेषु देवा मुख्याः, एतन्मते तु व्रजस्थनित्यपरिकरा एव।

## वल्लभमतेन सह पार्थक्यम्

वल्लभाचार्या हि शुद्धाद्वैतवादिनो वात्सल्यप्रधानां भक्तिमङ्गीकुर्वन्ति, एते तु माधुर्यप्रधानामेव। वल्लभमते व्रजपरिकराणां मुख्यत्वम्, एतन्मतेऽपि तथा।

## निम्बार्कमतेन सह पार्थक्यम्

निम्बार्कास्तु भेदाभेदवादिनः, एतेऽचिन्त्यभेदाभेदवादिनः। माध्वा रामानुजाश्च वैकुण्ठपतेर्नारायणस्य पारम्यम्, अन्येषां वासुदेवादीनां तद्विलासरूपत्वमङ्गीकुर्वन्ति। वल्लभ-निम्बार्क-श्रीकृष्णचैतन्यदेवास्तु गोलोकाधिपतेः श्रीकृष्णस्य पारम्यमन्येषां विष्णवादीनां तद्विलासरूपत्वं प्रतिपादयन्ति।

## गौड़ीयवैष्णवमतस्य वैशिष्ट्यम्

यथा चिन्तामणिः स्वयमविकृतः सन् सुवर्णादिकमभिलषितं विविधं वस्तु प्रसूते, तथाविच्युतस्वभावाद् भगवतः सर्वं जगदुत्पद्यते। यथा सांख्यमतसिद्धा प्रकृतिर्जगद्रूपेण परिणमते, न तथा भगवान्। अपरञ्च वैशिष्ट्यं तत्र प्रागभिहितम्।

## अस्य वैदिकत्वम्

नैतन्मतं पुरुषविशेषेणोद्भितमिति मन्तव्यमनादिकालात् प्रभृति सम्प्रदायक्रमेण मतमेतत् प्रवृत्तमित्यस्य वैदिकत्वमङ्गीकर्तव्यमनादित्वञ्च। श्रीकृष्णो भगवानस्य सम्प्रदायस्य पूर्वाचार्यः। गुरुपरम्परा तु ग्रन्थकृता प्रदर्शिताऽस्मिन् ग्रन्थे।

## जीवगोस्वामि-बलदेवयोर्मतभेदः

श्रीमज्जीवगोस्वामिपादाः श्रीभगवतोऽचिन्त्यशक्तिमेवाङ्गीकुर्वन्तः स्वपक्षं स्थापितवन्तः। बलदेवमहाभागास्तु मध्वान्तर्गतं विशेषपदार्थमवलम्ब्य स्वमतमुररीचक्रुः। यद्यप्युभयोराचार्ययोरंशविशेषे पार्थक्यं परिदृश्यते, तथापि चरमावस्थायामैक्यमवसीयते। यथा जीवगोस्वामिपादाः श्रीकृष्णसेवोपयोगिपार्षदत्वमिच्छन्ति, तथा एतेऽपि।

## अचिन्त्यभेदाभेदवादः

अचिन्त्यभेदाभेदवाद एव गौड़ीयवैष्णवसम्प्रदायसम्मतः। यद्यपि जीवगोस्वामिपादैरयं वादः स्वीकृतः, तथापि ग्रन्थकृता विद्याभूषणेन नायं खण्डितः, विशेषस्त्वतिरिक्तः समादृतः। तदुक्तं जीवगोस्वामिभिः भगवत्सन्दर्भे—'लोके हि सर्वेषां भावानां मणिमन्त्रादीनां शक्तयः अचिन्त्यज्ञानगोचराः—अचिन्त्यं तर्कासहं यज् ज्ञानं कार्यान्यथानुपपत्तिप्रमाणकं, तस्य गोचराः सन्ति। यद्वा भिन्नाभिन्नत्वादिविकल्पैश्चिन्तयितुमशक्याः केवलमर्थापत्तिज्ञानगोचराः सन्ति' इति।

सर्वसंवादिन्यां भगवत्सन्दर्भानुव्याख्यायां—

'तस्मात् स्वरूपादभिन्नत्वेन चिन्तयितुमशक्यत्वाद् भेदः, भिन्नत्वेन चिन्तयितुमशक्यत्वादभेदश्च प्रतीयत इति शक्तिशक्तिमतोर्भेदाभेदावेवाङ्गीकृतौ तौ चाचिन्त्यावि'ति।

सर्वसंवादिन्यां परमात्मसन्दर्भानुव्याख्यायामपि—

'स्वमते त्वचिन्त्यभेदाभेदावेवाचिन्त्यशक्तित्वात्।' इति

तदुक्तं ग्रन्थकृता सिद्धान्तरत्ने प्रथमपादे—

'विशेषस्त्ववश्यं स्वीकार्यः। स च भेदप्रतिनिधिर्भेदाभावेऽपि भेदकार्यस्य धर्मधर्मिव्यवहारस्य सत्यादिशब्दापर्यायतायाश्च निर्वर्तकः। इतरथा सत्ता सती, भेदो भिन्नः, कालः सर्वदास्ति, देशः सर्वत्रेत्य-

बाधितव्यवहारानुपपत्तिः। परेषामप्यावश्यकस्तत्स्वीकारः, इतरथा "विज्ञानमानन्दं ब्रह्म," "सत्यं ज्ञानमनन्तं ब्रह्मे"त्यादिषु स्वरूपमात्र-बोधकानां विज्ञानादिशब्दानां पर्यायतापत्तिः, भ्रमाधिष्ठानत्वादिना चैतन्यस्य सर्वदा तदभिन्नानन्दादेरिदानीमप्रकाशानुपपत्तिश्च।' इत्यनयोराचार्ययोर्वाक्यजातं समालोच्यैवमवगम्यतेऽचिन्त्यभेदाभेदवाद उभयसम्मतः। अन्यदपि रहस्यं सुधीभिर्विभाव्यम्।

## गौड़ीयवैष्णवमतसंक्षेपः

तदुक्तं गौड़ीयसम्प्रदायाचार्येण श्रीमद्भागवतटीकाकारश्रीश्रीनाथ-चक्रवर्तिना—

'आराध्यो भगवान् व्रजेशतनयस्तद्धाम वृन्दावनं
रम्या काचिदुपासना व्रजवधूवर्गेण या कल्पिता।
शास्त्रं भागवतं प्रमाणममलं प्रेमा पुमर्थो महान्
श्रीचैतन्यमहाप्रभोर्मतमिदं तत्रादरो नः परः॥' इति।

## ग्रन्थकृदाविर्भावकालः

एवंविधा सम्प्रदायपरम्परागता काचिदाख्यायिकाऽस्माभिः श्रूयते यद् जयपुराधिपतौ जयसिंहे राज्यं शासति तत्परिषदि गोविन्ददेव-सेवाधिकार-गल्तापीठाधिपत्यनिर्णयार्थं विविधवैष्णवसम्प्रदायपण्डि-तानां सम्मेलनमभवत्। तत्रापरसम्प्रदायिभिः पण्डितवरैर्नरपति-रवबोधितो गौड़ीयवैष्णवसम्प्रदाये प्रस्थानत्रयभाष्यकृत् कश्चिदाचार्यो नास्तीति न तत्सम्प्रदायो गोविन्ददेवसेवाधिकारं गल्तापीठाधिपत्यञ्च लब्धुमर्हतीति प्रत्यपद्यत। अथ विद्याविभूषणः श्रीमान् विद्याभूषणस्तत्र विचारनैपुण्यं प्रदर्श्य गौड़ीयवैष्णवसम्प्रदायभाष्यमस्तीति बभाषे। ततो भाष्यप्रदर्शनार्थमभिधीयमानः श्रीगोविन्दैकान्तो स गोविन्दचरणशरण-मुपागमत्। स्वप्ने गोविन्देनादिष्टः श्रीमान् ग्रन्थकृदेकेनैव मासेन ब्रह्म-

सूत्रभाष्यं व्यरचयत्। ततश्च तद् गोविन्दभाष्यमिति व्यपदिश्यते। गोविन्दभाष्यस्यान्तिमश्लोक एतस्या याथार्थ्यं प्रमाणयति—

'विद्यारूपं भूषणं मे प्रदाय
ख्यातिं निन्ये तेन यो मामुदारः।
श्रीगोविन्दस्वप्ननिर्दिष्टभाष्यो
राधाबन्धुर्बन्धुराङ्गः स जीयात्॥' इति।

स खलु श्रीरूपसनातनयोर्गोस्वामिप्रवरयोरर्वाक्तन इति तद्भाषणादेवावगम्यते—

'गोविन्दाभिधमिन्दिराश्रितपदं हस्तस्थरत्नादिवत्
तत्त्वं तत्त्वविदुत्तमौ क्षितितले यौ दर्शयाञ्चक्रतुः।
मायावादमहान्धकारपटलीसत्पुष्पवन्तौ सदा
तौ श्रीरूपसनातनौ विरचिताश्चर्यौ सुवर्यौ स्तुमः॥' इति।

आसीत् किल श्रीमद्रूपगोस्वामी होसेननामधेयस्य वङ्गाधिपतेर्यवनराजस्य मन्त्रीति।

श्रीमज्जीवगोस्वामिपादाः श्रीमद्रूपगोस्वामिशिष्या भ्रातृतनयाश्चेति सर्वजनविदितमेतत्। ग्रन्थकृद्वचनात् श्रीमज्जीवगोस्वामिविरचितषट्सन्दर्भटीकाप्रणयनाच्च ततोऽप्यधस्तन इति स्फुटमवगम्यते। तत्र स्ववचनं यथा—

'यः साङ्ख्यपङ्केन कुतर्कपांशुना
विवर्तगर्तेन च लुप्तदीधितिम्।
शुद्धं व्यधाद्वाक्सुधया महेश्वरं
कृष्णं स जीवः प्रभुरस्तु नो गतिः॥' इति

छन्दःकौस्तुभादिग्रन्थप्रणेता श्रीराधादामोदरदासो ग्रन्थकृद्गुरुरिति तत्कृतभाष्योक्तेरवगम्यते—

'अर्चितनयनानन्दो राधादामोदरो गुरुर्जीयात्

... ... ... ...

श्रीराधादामोदरशिष्यो विद्याभूषणो नाम्ना
छन्दःकौस्तुभशास्त्रे भाष्यमिदं सम्प्रति व्यदधात् ॥' इति ।

न चायमब्राह्मण इति मन्तव्यं, कालिदास-हरिदासादिवद् राधादामोदरदास इति तन्नामधेयसम्भवात्। दासस्योपाधित्वेऽपि तस्य तालव्यान्तत्वं, किञ्च साम्प्रतमुत्कले दाशोपाधिका बहवो ब्राह्मणाः सन्ति, तथाच नायमब्राह्मणः ।

साहित्यकौमुद्यां ग्रन्थकृतोऽन्तिमः श्लोकः—

'आनन्दयति श्यामां रसिकान्नयनानि स्वधामानि च
विस्मापकदामोदरलोलोऽवतु नः स गोविन्दः ॥' इति ।

कृष्णानन्दिनीतिप्रसिद्धायां तट्टीकायामपि—

'श्रीदामोदरस्य निजगुरोरपि विस्मापकसौन्दर्यत्वात्तथोक्तम् ।' इति ।

ग्रन्थकारो जयपुरराजस्य जयसिंहस्य सदसि पण्डितैः सार्द्धं विचारार्थमराजत। तत्र स गौड़ीयवैष्णवसम्प्रदायप्राधान्यं स्थापयामास। ततः प्रभृति तत्र गौड़ीयवैष्णवसम्प्रदायः पूज्यते। षोड़शशकाब्दे राजा जयसिंहो राज्यमकरोदिति ग्रन्थकृतोऽपि तादृशः कालः स्वीकर्तव्यः ।

## टीकाकृत्परिचयः

कान्तिमालाभिधा संक्षिप्ता टीका टिप्पनी वा विरचिता केनचिद् वेदान्तवागीशेन। संक्षिप्ताप्येषा न स्वमतं व्यभिचरति। टीकाया अन्तिमश्लोकस्तावत् टीकाकृतं वेदान्तवागीशोपाधिना परिचाययति। कस्यचिन्मतते कृष्णदेववेदान्तवागीश इति तन्नामधेयम्। अस्माभिरपि तदेव नाम परिगृहीतम्। यत्र नाम्नि विशयस्तत्राऽपरः परिचयो दुर्लभ एव ।

# कृतज्ञताप्रकाश:

विविधभाषातत्त्वज्ञश्रीमद् अमूल्यचरणघोषविद्याभूषणमहाशयो हस्तलिखितपुस्तकादिसाहाय्येन सम्यगस्मदुपकारक: संवृत्त:, अत: स सुधीवर: सततमाशिषाऽभिनन्द्यते। पण्डितवर्यश्रीयुत-कालीपद-तर्काचार्यमहाशयो लब्धाभ्युदय: श्रीयुतचिन्ताहरणकाव्यतीर्थ एम्. ए. महोदयश्च विविधविषयोपदेशेनास्माननुगृहीतवन्तौ। तावपि सादर-मभ्यर्थ्येते इति शम्।

आश्रव—

श्रीमद् अक्षयकुमारशर्मा।

# प्रमेयरत्नावलीविषयसूची

## प्रथमप्रमेये—

## द्वितीयप्रमेये—

विषयाः पृष्ठे

तृतीयप्रमेये—



चतुर्थप्रमेये—



पञ्चमप्रमेये—



षष्ठप्रमेये—



सप्तमप्रमेये—

## अष्टमप्रमेये—



## नवमप्रमेये—

---

## प्रमेयरत्नावलीधृतानां ग्रन्थानां नामानि।

पद्मपुराणम्।
श्रीगोपालपूर्वतापनीयोपनिषत्।
श्वेताश्वतरोपनिषत्।
कठोपनिषत्।
श्रीमद्भगवद्गीता।
बृहदारण्यकोपनिषत्।
श्रीगोपालोत्तरतापनीयोपनिषत्।
मुण्डकोपनिषत्।
श्रीमद्भागवतम्।
तैत्तिरीयोपनिषत्।
नारदपञ्चरात्रम्।
विष्णुपुराणम्।
महावाराहपुराणम्।
अथर्वोपनिषत्।
गौतमीयतन्त्रम्।
छान्दोग्योपनिषत्।
ऋग्वेदः।
ब्रह्मसंहिता।
हरिवंशः।
ईशावास्योपनिषत्।
महाभारतम्।
स्मृतिः।
प्रश्नोपनिषत्।
ब्रह्मसूत्रम्।
कौथुमोपनिषत्।

---

# प्रमेयरत्नावली

## प्रथमप्रमेयम्

### मङ्गलाचरणम्

( १ )

**जयति श्रीगोविन्दो गोपीनाथः स मदनगोपालः ।**
**वक्ष्यामि यस्य कृपया प्रमेयरत्नावलीं सूक्ष्माम् ॥ १**

### कान्तिमाला

( २ )

गौडोदयमुपयातस्तमः समस्तं निहन्ति यो युगपत् ।
ज्योतिर्मयोऽतिशीतः पीतस्तमुपास्महे कृताञ्जलयः ॥ १

विद्याभूषणापरनाम्ना बलदेवेन श्रीगोविन्दैकान्तिना ब्रह्मसूत्रेषु गोविन्दभाष्याभिधानं व्याख्यानं विरचितम् । अथ कैश्चिच्छिष्यैर्भाष्यप्रमेयाणि परिपृष्टः स तानि संक्षेपाद् वक्ष्यन् निर्विघ्नायै तत्पूर्तये मङ्गलमाचरति—जयतीति । कीदृशः श्रीगोविन्द इत्याह—गोपीनाथो वल्लवीकान्तः, मदयति मनांसि भक्तानामिति मदनः, गाः पालयतीति गोपालः, ततः कर्मधारयः । स्फुटार्थमन्यत् । श्लेषेण वृन्दाटवीमधिष्ठितानां श्रीगोविन्दादिसंज्ञानां निखिलचैतन्यभक्ताभीष्टानां त्रयाणामर्चावताराणां जयाशंसनम् । उभयतः (३) प्रणतिलक्षणमङ्गलं कृतं जयतिना तस्याक्षेपात् ॥ १

### प्रभा

प्रणम्य सच्चिदानन्दं जगतामीश्वरं हरिम् ।
परतत्त्वप्रकाशार्थां मेयरत्नावलेः प्रभा ॥

---

(१) मूलश्लोकोपरि—श्यामसुन्दरो जयति इति पाठः 'ग' पुस्तके दृश्यते ।

(२) कान्तिमालाटीकाया आदौ श्रीगणेशाय नमः इति 'ग' पुस्तके ।

(३) उभय—इति 'ग' पुस्तके ।

भारद्वाजेन विप्रेण श्रीमदच्युतशर्मणा ।
बालानामवबोधाय स्फुटं व्याकीर्यते मया ॥

अथ श्रीगोविन्दैकान्ती विश्ववैष्णवराजसभासभाजनभाजनं निखिलशास्त्रार्थसारज्ञो गौड़विभूषणो विद्याभूषणोपनामकस्तत्रभवान् ग्रन्थकृच्छ्रीमान् बलदेवः श्रीगोविन्दकृपया गोविन्दभाष्याभिधानं ब्रह्मसूत्रव्याख्यानं विरचय्य मन्दमतीनां विनेयानां हिताय संक्षेपेण माध्वमतानुगत-गोविन्दभाष्यप्रमेयाणि वक्तुकामो निर्विघ्नं ग्रन्थसमाप्तये विघ्ननिवृत्तये वा मङ्गलमाचरति—जयतीति। श्रीगोविन्दः श्रीगोपाललीलः, अनेन सुखसेव्यत्वं सूच्यते, जयति सर्वोत्कर्षेण वर्तते। यद्यपि—

दिग्-दृष्टि-दीधिति-स्वर्ग-वज्र-वाग्-बाण-वारिषु।
भूमौ पशौ च विद्वद्भिर्गोशब्दो दशसु स्मृतः॥ इति

कोषोक्तेः, 'गोभूमिवेदविदि'त्यादिश्रौतनिरुक्तेरर्थान्तरमप्यस्ति, तथापि 'महेन्द्रमदभित् प्रीयान्न इन्द्रो गवाम् [भा० १०।२६।२५] इति शुकोक्तेस्तथा व्याख्यातम्। स कीदृश इत्याह—गोपीनाथ इति। गोपीनामानन्दचिन्मयरसप्रतिभावितानां ह्लादिनीवृत्तिरूपाणां गोपदेवीनां नाथः स्वामी। तथाहि गोपालपूर्वतापनीयोपनिषदि—'तदु होवाच ब्राह्मणः कृष्णो वै परमं दैवतं, गोविन्दान्मृत्युर्बिभेति, गोपीजनवल्लभज्ञानेन तज् ज्ञातं भवति स्वाहेदं संसरति'।१।इति। 'स वो हि स्वामी भवति' इति गोपालोत्तरतापनीयश्रुतेः। 'अनेकजन्मसिद्धानां गोपीनां पतिरेव सः' इति गौतमीयतन्त्राच्च। तदनुगततया ताद्रूप्येणोपासनयाऽन्येषामपि तत्प्राप्तिर्भवतीति सूचितम्। स च मदनगोपालः, मदयति चेतांसि ब्रह्मरुद्रादीनां भगवद्भक्तानामिति मदनः। तथा चोक्तं श्रीमद्भागवते—

'सवनशस्तदुपधार्य सुरेशाः शक्रशर्वपरमेष्ठिपुरोगाः।
कवय आनतकन्धरचित्ताः कश्मलं ययुरनिश्चितचित्ताः॥' १०।३५।१५ इति

मदनश्चासौ गोपालश्चेति मदनगोपालः। यद्यपि पूर्वाचार्यमाध्वमते स्वतन्त्रमस्वतन्त्रञ्चेति तत्त्वद्वयं, तच्च प्रमेयं, तथाप्यवान्तरप्रमेयभेदेनात्र बहुत्वम्। ननु 'प्रमेयसिद्धिः प्रमाणाद्धि' इति न्यायेन प्रमेयनिरूपणार्थं प्रागेव प्रमाण-

सत्त्वमावश्यकं, न च तदत्र प्रतिपादितमतो न्यूनतेति चेन्न, प्रत्यक्षानुमाना-गमाख्यप्रमाणत्रयाणामत्राङ्गीकारादाद्ययोर्वासुदेवे परे तत्त्वेऽसम्भवादागमैक-गम्यत्वाच्च तस्य, तच्च प्रतिपादयिष्यते ग्रन्थकृता स्वयमेव। प्रमाणप्रमेययोः प्रमेयस्यैवाभ्यर्हितत्वात् प्राधान्येन तन्निरूप्यते ग्रन्थनाम्ना संकीर्त्यते च। वक्ष्यति च 'प्रमाणं प्रत्यक्षादित्रयञ्च' इति प्रमाणत्रित्वम् ॥ १

### বঙ্গানুবাদ

গোপীগণের পতি, মদনগোপাল, ভক্তবৃন্দের চিত্তাকর্ষক, গোপালক শ্রীগোবিন্দ সর্ব্ববিধ উৎকর্ষ লাভ করিয়া বিরাজ করিতেছেন। তাঁহার উদ্দেশে আমাদের প্রণিপাত, তাঁহারই কৃপায় সূক্ষ্ম প্রমেয় অর্থাৎ প্রতিপাদ্য পদার্থরূপ রত্নসমূহ বিবৃত করিব॥ ১

**भक्त्याभासेनापि तोषं दधाने**
**धर्माध्यक्षे विश्वनिस्तारिनाम्नि ।**
**नित्यानन्दाद्वैतचैतन्यरूपे**
**तत्त्वे तस्मिन्नित्यमास्तां रतिर्नः ॥ २**

### कान्तिमाला

पुनरपि तत्र रतिप्रार्थनं मङ्गलमाह—भक्त्येति। तत्त्वे परमात्मनि कृष्णे 'तत्त्वं वाक्य-प्रभेदे स्यात् स्वरूपे परमात्मनि' इति विश्वः। कीदृशीत्याह—भक्त्याभासेनापीति। यथा पुत्रोद्देशेन नामोच्चारयत्यजामिले तुष्टिर्दृष्टा। धर्माणामध्यक्षे प्रवर्तके। नित्य आनन्दो यस्य तन्नित्यानन्दस्य, नास्ति द्वैतं देहदेहिभेदो यस्य तदद्वैतञ्च, चैतन्यं विज्ञानञ्चेति कर्मधारयः, तद्रूपे तदात्मके। पक्षे, कलावस्मिन् श्रीकृष्णो बलदेवेन महाविष्णोरवतारेण च सहितो (१) जनानुद्धर्त्तुमवततार। तत्र श्रीकृष्णस्य चैतन्य इति बलदेवस्य (२) नित्यानन्द इति महा-विष्णोरवतारस्याऽद्वैत (३) इति नामाऽभूत्। तस्मिन् चिद्रूपे तत्त्वे नो रतिर्नित्यमास्ताम्। अन्यत् प्राग्वत्, प्रमाणं त्ववाकरग्रन्थाद् ग्राह्यम् ॥ २

---

(१) सङ्कर्षणेन प्रद्युम्नेन च सहितः—इति 'क' तथा 'ग' पुस्तके च पाठः।

(२) सङ्कर्षणस्य—इति 'क' तथा 'ग' पुस्तके।

(३) ग्रम्भीरत्वद्वैतः—इति 'क' तथा 'ग' पुस्तके।

## प्रभा

विषयवैमुख्येन भगवति परे तत्त्वे रतिं प्रार्थयते—भक्त्याभासेनेति। यद्यप्यनन्यया भक्त्यैव भगवान् प्राप्तव्यः, 'भक्त्या त्वनन्यया लभ्योऽहमेवंविधोऽर्जुन!' [११।५४] इत्यादि श्रीमद्भगवद्गीतास्मरणात्, तथापि भक्त्याभासेन भक्तिप्रतिरूपकेण, न तु वास्तवभक्त्या, भक्तिस्तु आनुकूल्येन कृष्णानुशीलनरूपा, सा चेन्न सम्भवेत्, तथापि 'विक्रुश्य पुत्र मघवान् यदजामिलोऽपि, नारायणेति म्रियमाण इयाय मुक्तिम्' [भा० ६।३।२४] इत्युक्तदिशाऽन्यव्यपदेशेन भगवन्नामोच्चारणरूपेण भक्त्याभासेनेत्यर्थः। भक्त्याभासत्वं नाम कृष्णान्यतात्पर्येणानुशीलनत्वम्। तोषं प्रीतिं दधाने धारयति, धर्माध्यक्षे धर्मस्य भगवद्भक्तिलक्षणस्याध्यक्षे प्रवर्तके। विश्वनिस्तारिनाम्नि—विश्वान् जनान् निस्तारयितुं शीलमस्येति विश्वनिस्तारि, तादृशं नाम यस्मिन्। नित्योऽप्राकृत आनन्दो यस्मिन् स नित्यानन्दः, नास्ति द्वैतं हरिणा सह भेदो यस्य सोऽद्वैतः, ताभ्यां विलाससांशाभ्यां यत् श्रीकृष्णचैतन्याख्यतत्त्वं तस्मिन्। तस्मिन् शास्त्रप्रसिद्धे स्वयंरूपाख्ये तत्त्वे परमार्थवस्तुनि नोऽस्माकं, बहुवचनं शिष्याभिप्रायेण। नित्यमविरतं यथा स्यात् तथा रती रत्यपरपर्याया भावभक्तिरित्यर्थः, आस्तामस्तु—इति प्रार्थना। नित्यानन्देत्यनेन प्राकृतानन्दस्य व्यवच्छेदः। न चानन्दस्य गुणत्वाद् गुणवतो द्रव्यस्य घटादिवदनित्यत्वप्रसङ्गः, निर्गुणश्रुतीनां प्राकृतहेयगुणनिषेधपरत्वादप्राकृतगुणानां तत्र सत्त्वात्, अन्यथा 'यः सर्वज्ञः सर्ववित्', 'यदात्मको भगवान् तदात्मिका व्यक्तिः किमात्मको भगवान् ज्ञानात्मक ऐश्वर्यात्मकः शक्त्यात्मकश्च', 'देवात्मशक्तिं स्वगुणैर्निगूढाम्' इत्यादयः श्रुतयः—

'मां भजन्ति गुणाः सर्वे निर्गुणं निरपेक्षकम्।
सुहृदं प्रियमात्मानं साम्यासङ्गादयोऽगुणाः॥' [भा० ११।१३।४०] इति

'नमः सर्वगुणातीतषड्गुणायादिवेधसे।' [नारदपञ्चरात्रम्] इति

'गुणैः स्वरूपभूतैस्तु गुण्यसौ हरिरीश्वरः।
न विष्णुर्न च मुक्तानां क्वापि भिन्नगुणो मतः॥' [ब्रह्मतर्कः] इति

'एते चान्ये च भगवन्नित्या यत्र महागुणाः।

प्राप्य्याँ मद्दत्त्वमिच्छन्निर्नं वियन्ति स्म कर्हिचित् ॥' [भा०११।१६।३०]

इति च स्मृतयो व्याकुप्येरन् ॥ २

বঙ্গানুবাদ

যিনি ভক্ত্যাভাসের দ্বারাও প্রীতিবিধান করেন, যাঁহার শ্রীমুখারবিন্দবিনিঃসৃত কৃষ্ণাদিনাম শ্রবণ করিয়া লোক সংসার হইতে নিস্তার লাভ করেন, সেই নিত্যানন্দ ও অদ্বৈতসমন্বিত শ্রীকৃষ্ণচৈতন্যরূপ তত্ত্বে আমাদের সর্ব্বদা প্রীতি থাকুক। অনুকূলভাবে কৃষ্ণানুশীলনের নাম ভক্তি, কৃষ্ণভিন্নতাৎপর্য্যে অনুশীলনের নাম ভক্ত্যাভাস, যেমন অজামিল পুত্রের উদ্দেশে ভগবানের নাম উচ্চারণ করিয়া মুক্তি লাভ করিয়াছেন ॥ ২

**आनन्दतीर्थनामा सुखमयधामा यतिर्जीयात् ।**
**संसारार्णवतरणिं यमिह जनाः कीर्तयन्ति बुधाः ॥३**

कान्तिमाला

अथ पूर्वाचार्यं प्रणमति—आनन्देति । आनन्दतीर्थ इति श्रीमध्वाचार्यस्य नामान्तरं, यतिः परिव्राट्, तरणिं नौकाम् ॥ ३

प्रभा

सम्प्रदायप्रवर्तकमाचार्यं प्रणमति—आनन्देति । आनन्दतीर्थ इति नाम यस्य सः, आनन्दतीर्थ इति वायोरवतारभूतस्य मध्वाचार्यस्य नामधेयान्तरम् । सुखमयमानन्दस्वरूपं धाम यस्य सः, स च सुखस्वरूपे नित्ये श्रीनिवासचरणकमले निवसति । अथवा सर्वेषां संसारतापदग्धानां जीवानां सुखमयधामरूपः । जना हि नित्यानन्दं भगवन्तमुपदिशन्तं तमवलम्बन्ते । यतिः परिव्राजको जीयात् सर्वोत्कर्षेण वर्तताम् । इह संसारे बुधास्तत्त्वज्ञा यमानन्दतीर्थं संसार एवार्णवः समुद्रः, अपारत्वात्, तस्य तरणिं नावमुद्धरणोपायमित्यर्थः, कीर्तयन्ति वर्णयन्ति ॥ ३

বঙ্গানুবাদ

আনন্দতীর্থ যাঁহার নাম, যিনি সুখময় ধামে অবস্থান করিয়াছেন, তত্ত্বজ্ঞগণ

যাঁহাকে সংসারসমুদ্রের নৌকা বলিয়া কীর্ত্তন করেন, সেই সন্ন্যাসী মধ্বাচার্য্য জয়যুক্ত হউন ॥ ৩

গুরুপরম্পরাস্মরণফলম্

**ভবতি বিচিন্ত্যা বিদুষা নিরবকরা গুরুপরম্পরা নিত্যম্**
**একান্তিত্বং সিধ্যতি যয়োদয়তি যেন হরিতোষঃ ॥৪**

## কান্তিমালা

ভাষ্যপ্রমেয়াণি যতো লব্ধানি, সা গুরুপরম্পরা ধ্যেয়েত্যাহ—ভবতীতি। গুরুপরম্পরা দৈশিকবংশঃ, শিষ্যপ্রশিষ্যাদিধারা (১) 'পরম্পরা পরীপাট্যাং সন্তানেঽপি (২) বধে ক্বচিৎ' ইতি বিশ্বঃ। নিরবকরা নির্দোষা, তস্যা ধ্যানেন কিং স্যাদিত্যবাহ—যয়া পরম্পরয়া ধ্যাতয়া ধ্যাতুরৈকান্তিত্বং সিধ্যতি হর্য্যেকনিষ্ঠত্বং ভবতি, যেনৈকান্তিত্বেন হরিতোষ উদয়তি।

'তেষাং জ্ঞানী নিত্যযুক্ত একভক্তির্বিশিষ্যতে।

প্রিয়ো হি জ্ঞানিনোঽত্যর্থমহং স চ মম প্রিয়ঃ ॥ ৪ [গীতা ৭।১৭] ইত্যাদি স্মৃতেঃ।

## প্রভা

**সম্প্রদায়প্রবর্ত্তকানাং গুরূণাং ধ্যেয়ত্বমাহ—ভবতীতি। নিরবকরাঽনবদ্যা সম্প্রদায়প্রবর্ত্তকানাং গুরূণামাচার্য্যাণাং পরম্পরা ধারা বিদুষা জ্ঞানবতা পুরুষেণ নিত্যং সততং বিচিন্ত্যা ধ্যেয়া। যয়া গুরুপরম্পরয়া ধ্যাতয়েত্যর্থঃ, একান্তিত্বং হর্য্যেকনিষ্ঠত্বং সিধ্যতি ভবতি, যেন একান্তিত্বেন, হরিতোষো ভগবৎপ্রীতিঃ, উদয়তি আবির্ভবতি। স চ ভগবান্ ধ্যানেন প্রীতঃ সন্ অভীষ্টং ফলং প্রযচ্ছতি ॥ ৪**

## বঙ্গানুবাদ

বিদ্বদ্ব্যক্তি নির্দ্দোষ গুরুপরম্পরা নিত্য ধ্যান করিবেন। মানব যাহার দ্বারা একাগ্রতা লাভ করেন এবং যে একাগ্রতার দ্বারা ভগবান্ শ্রীহরির প্রীতি হইয়া থাকে ॥ ৪

---

(১) শিষ্যপ্রশিষ্যাদিধারা—ইতি পাঠঃ 'ক' তথা 'গ' পুস্তকে নাস্তি।

(২) ঘ।

कलौ सम्प्रदायाविर्भावकथनम्

यदुक्तं पद्मपुराणे—

सम्प्रदायविहीना ये मन्त्रास्ते विफला मताः।
अतः कलौ भविष्यन्ति चत्वारः सम्प्रदायिनः॥
श्री-ब्रह्म-रुद्र-सनका वैष्णवाः क्षितिपावनाः।
चत्वारस्ते कलौ भाव्या ह्युत्कले पुरुषोत्तमात्॥ (क) इति

## कान्तिमाला

प्रमेयोपदेशपथप्रवर्त्तकाश्चत्वारः प्रागभूवन्, तेभ्यो गङ्गाप्रवाहवदपरे प्रचरिताः। तदुपदिष्टेन पथा विना मन्त्रशास्त्रादुपलब्धा विष्णुमन्त्रा मुक्तिदा न भवन्तीति। अत्र पाद्मवाक्यमाह—सम्प्रदायेति। शिष्टानुशिष्टगुरूपदिष्टो मार्गः सम्प्रदायः। शिष्टत्वं वेदप्रामाण्याभ्युपगन्तृत्वम्। अतः सम्प्रदायविहीनानां विष्णुमन्त्राणां जप्तानामपि वैफल्याद्धेतोः कलौ तदारम्भे सम्प्रदायिनस्ते केऽभूवन्, तत्राह—श्रीति। पुरुषोत्तमादिति जगन्नाथात् तत्प्रेरणात्तत्क्षेत्रादित्यर्थः॥ (क)

## प्रभा

सम्प्रदायपरम्परागतानां मन्त्राणां फलवत्त्वमाह पद्मपुराणं—सम्प्रदायेति। ये मन्त्राः सम्प्रदायविहीना गुरुपरम्परारहितास्ते विफलाः फलरहिता मता विदुषामिति शेषः। सम्प्रदायो नाम गुरुपरम्परागतः सदुपदेशः। यस्तु मन्त्रः सम्प्रदायपरम्परया न लब्धः स्वयमूहितो ग्रन्थादिदर्शनेन वा निश्चितः, न स फलं भगवत्प्राप्तिरूपमपवर्गं प्रयच्छति। अतः सम्प्रदायविहीनमन्त्राणां फलराहित्यात् कलौ चत्वारः सम्प्रदायिनो वैष्णवशास्त्रप्रवर्तका भविष्यन्ति। के ते इत्याकाङ्क्षायामाह—श्रीब्रह्मेति। क्षितिपावना जन्मना जगत्पवित्रताकारिणो वैष्णवा विष्णुभक्ताः श्री-ब्रह्म-रुद्र-सनकाः श्रीसम्प्रदाया ब्रह्मसम्प्रदाया रुद्रसम्प्रदायाः सनकसम्प्रदायाश्च चत्वार उत्कले तदाख्यप्रसिद्धदेशे पुरुषोत्तमाद् भगवतः श्रीकृष्णात् तदाख्यक्षेत्राद्वा कलौ भाव्या उत्पाद्याः, हि निश्चये॥ (क)

## বঙ্গানুবাদ

পদ্মপুরাণে এইরূপ উক্ত হইয়াছে যথা—সম্প্রদায়বিহীন মন্ত্র জপ করিলে কোন

ফল হয় না, অতএব কলিকালে চারিটী বৈষ্ণবসম্প্রদায় আবির্ভূত হইবেন। জগতের পবিত্রতাসম্পাদনকারী বিষ্ণুভক্ত শ্রী, ব্রহ্ম, রুদ্র ও সনক—এই চারিটী সম্প্রদায় কলিযুগে উৎকলদেশে ভগবান্ শ্রীকৃষ্ণ হইতে অথবা পুরুষোত্তম ( জগন্নাথ ) ক্ষেত্র হইতে আবির্ভূত হইবেন ॥ ( ক )

আচার্য্যচতুষ্টয়নামকথনম্

**রামানুজং শ্রীঃ স্বীচক্রে মধ্বাচার্য্যং চতুর্ম্মুখঃ।**
**শ্রীবিষ্ণুস্বামিনং রুদ্রো নিম্বাদিত্যং চতুঃসনঃ। (খ)**

## কান্তিমালা

আদিভূতাংস্তু চত্বারঃ স্বস্বসম্প্রদায়ান্ প্রৌঢ়ান্ বীক্ষ্য স্বস্বশ্রেষ্ঠ (১) তত্তুর্য্যাংশ্চতুরশ্চক্রু-রিত্যাহ—রামেতি। শ্রীর্লক্ষ্মীঃ স্বসম্প্রদায়প্রবর্ত্তনক্ষমতয়া রামানুজং স্বীচক্রে, স্ফুটার্থ-মন্যৎ ॥ (খ)

## প্রভা

তত্রাসাধারণসম্প্রদায়মাহ—রামেতি। শ্রীর্লক্ষ্মী রামানুজং সম্প্রদায়-প্রবর্ত্তকত্বেন স্বীচক্রে। স্বরূপভূতয়া লক্ষ্ম্যা বিনা ভগবৎপ্রীত্যসম্ভবাৎ সাম্প্রদায়িকা, অতস্তৎসম্প্রদায়স্তু শ্রীনাম্না খ্যাতঃ। চতুর্ম্মুখো ব্রহ্মা মধ্বা-চার্য্যং সম্প্রদায়প্রবর্ত্তকত্বেন স্বীচক্রে। চতুঃসনশ্চত্বারঃ সনাঃ সনক-সনন্দন-সনাতন-সনৎকুমারা যস্য সঃ, নিম্বাদিত্যং নিম্বার্কম্। তথা চোক্তং লঘু-ভাগবতামৃতে—

'চতুর্ভিরবতারোঽয়মেক এব সতাং মতঃ।
সন-শব্দাচ্চতুর্ব্বেব চতুঃসন ইতি স্মৃতঃ॥' ইতি। (খ)

## বঙ্গানুবাদ

উক্ত চারিটী সম্প্রদায়ের মধ্যে বিষ্ণুশক্তি লক্ষ্মীদেবী রামানুজকে, ব্রহ্মা মধ্বাচার্য্যকে, রুদ্র শ্রীবিষ্ণুস্বামীকে এবং চতুঃসন অর্থাৎ সনক, সনন্দন, সনাতন ও সনৎকুমার নিম্বার্ককে সম্প্রদায়-প্রবর্ত্তকরূপে স্বীকার করিয়াছিলেন ॥ ( খ )

---

(১) স্বস্বধর্ম্মেষু ইতি 'গ' পুস্তকে।

तत्र स्वगुरुपरम्परा यथा—

श्रीकृष्ण-ब्रह्म-देवर्षि-बादरायणसंज्ञकान्।
श्रीमध्व-श्रीपद्मनाभ-श्रीमन्नृहरि-माधवान्॥
अक्षोभ्य-जयतीर्थ-श्रीज्ञानसिन्धु-दयानिधीन्।
श्रीविद्यानिधि-राजेन्द्र-जयधर्मान् क्रमाद् वयम्॥
पुरुषोत्तम-ब्रह्मण्य-व्यासतीर्थांश्च संस्तुमः।
ततो लक्ष्मीपतिं श्रीमन्माधवेन्द्रञ्च भक्तितः॥
तच्छिष्यान् श्रीश्वराद्वैत-नित्यानन्दान् जगद्गुरून्॥
देवमीश्वरशिष्यं श्रीचैतन्यञ्च भजामहे।
श्रीकृष्णप्रेमदानेन येन निस्तारितं जगत्॥ इति (ग)

(१)

## कान्तिमाला

मुख्यप्रयोजनाभावात् आद्यादिपरम्परां विहाय स्वकीयां ब्रह्मपरम्परामाह—श्रीकृष्णेति (२) ब्रह्मणः श्रीकृष्णशिष्यत्वं (३) श्रीगोपालपूर्वतापन्यां विस्फुटम्। श्रीमध्वमुनेर्बादरायणशिष्यत्वं त्वैतिह्यप्रसिद्धम्। मध्वशङ्करौ सहस्रविद्वद्गोष्ठीमध्यस्थौ मणिकर्णिकायामनशनतया विचारं चक्रतुः। तत्र नभसि नीलाभ्रप्रख्यः सर्वैर्दृष्टो व्यासः मध्वमतं स्वीचकार, शङ्करमतं त्वत्याक्षीदिति प्रसिद्धम्। तच्छिष्यानिति—तन्माधवेन्द्रस्य शिष्यान् श्रीश्वराचार्याद्वैताचार्यनित्यानन्दान्। देवमिति। माधवेन्द्रस्य ईश्वर, ईश्वरस्य श्रीकृष्णचैतन्य इति। इत्थञ्च त्रयाणां प्रभूणां वंशै(४)रिदानीन्तनैः संबन्ध स्वगुरुपरम्परा सर्वैर्बोद्धव्या इति दर्शितम्। येनेति श्रीचैतन्येन॥ (ग)

## प्रभा

तत्र—पद्मपुराणे। श्रीकृष्ण एतत्सम्प्रदायादिगुरुः। तच्छिष्यो ब्रह्मा, स च

---

(१) 'क', 'ख' तथा 'घ' पुस्तके इति गुरुपरम्परा इति पाठो दृश्यते।

(२) कृष्णेति पाठस्तु 'क' तथा 'ख' पुस्तके।

(३) कृष्णशिष्यत्वम् इति 'ग' पुस्तके।

(४) शिष्यधाराभिः इति 'ख' पुस्तके।

পুরা ভগবতঃ শ্রীকৃষ্ণাজ্জাতস্তস্মাচ্চ বিদ্যামবাপ। তথা চ গোপালপূর্বতাপনীয়োপনিষৎ—"যো ব্রহ্মাণং বিদধাতি পূর্বং যো বিদ্যাস্তস্মৈ গাপয়তি স্ম কৃষ্ণঃ তং দেবমাত্মবৃত্তিপ্রকাশং মুমুক্ষুর্বৈ শরণমমুং ব্রজেৎ" ইতি। ব্রহ্মশিষ্যস্তু দেবর্ষির্নারদ ইত্যর্থঃ। নারদস্য ব্রহ্মশিষ্যত্বং পুরাণপ্রসিদ্ধম্। নারদশিষ্যস্তু বাদরায়ণো বেদব্যাসঃ। তচ্ছিষ্যঃ শ্রীমধ্বাচার্য্যঃ, শ্রীমধ্বশিষ্যঃ শ্রীপদ্মনাভঃ, তচ্ছিষ্যঃ শ্রীনৃহরি, তচ্ছিষ্যঃ শ্রীমাধবঃ, তচ্ছিষ্যঃ শ্রীমান্ অক্ষোভ্যঃ, তচ্ছিষ্যো জয়তীর্থঃ, তচ্ছিষ্যঃ শ্রীজ্ঞানসিন্ধুঃ, তচ্ছিষ্যো দয়ানিধিঃ, তচ্ছিষ্যঃ শ্রীবিদ্যানিধিঃ, তচ্ছিষ্যো রাজেন্দ্রঃ, তচ্ছিষ্যো জয়ধর্মঃ, তচ্ছিষ্যঃ পুরুষোত্তমঃ, তচ্ছিষ্যো ব্রহ্মণ্যঃ, তচ্ছিষ্যো ব্যাসতীর্থঃ, ব্যাসতীর্থশিষ্যস্তু লক্ষ্মীপতিঃ, তচ্ছিষ্যঃ শ্রীমাধবেন্দ্রঃ। বয়ং ক্রমাৎ ক্রমেণ এতান্ সম্প্রদায়প্রবর্তকান্ ভক্তিতো ভক্ত্যা সংস্তুমঃ। শ্রীমাধবেন্দ্রশিষ্যাস্তু (১)শ্রীঈশ্বরাচার্যঃ (২)শ্রীঅদ্বৈতাচার্যঃ (৩)শ্রীনিত্যানন্দশ্চেতি ত্রয়ো জগদ্গুরবঃ, এতান্ বয়ং ভজামহে গুরুত্বেনাশ্রয়ামঃ। ঈশ্বরশিষ্যশ্চ দেবো ভগবান্ শ্রীচৈতন্যঃ, যেন খলু শ্রীকৃষ্ণপ্রেমভক্তিদানেন জগৎ নিস্তারিতং, তমপি বয়ং ভজামহে ॥ (গ)

## বঙ্গানুবাদ

পদ্মপুরাণে স্বীয় গুরুপরম্পরা উক্ত হইয়াছে যথাঃ—শ্রীকৃষ্ণ এই সম্প্রদায়ের আদিগুরু। শ্রীকৃষ্ণশিষ্য ব্রহ্মা, ব্রহ্মশিষ্য নারদ, নারদশিষ্য বাদরায়ণ অর্থাৎ বেদব্যাস। বেদব্যাসশিষ্য শ্রীমান্ মধ্বাচার্য্য, তাঁহার শিষ্য শ্রীমান্ পদ্মনাভ, পদ্মনাভশিষ্য শ্রীনৃহরি, তদীয় শিষ্য মাধব, তাঁহার শিষ্য অক্ষোভ্য, তদীয় শিষ্য জয়তীর্থ, জয়তীর্থশিষ্য শ্রীজ্ঞানসিন্ধু, তদীয় শিষ্য দয়ানিধি, তচ্ছিষ্য শ্রীবিদ্যানিধি, তাঁহার শিষ্য রাজেন্দ্র, রাজেন্দ্রশিষ্য জয়ধর্ম্ম, তাঁহার শিষ্য পুরুষোত্তম, তদীয় শিষ্য ব্রহ্মণ্য, তাঁহার শিষ্য ব্যাসতীর্থ, তদীয় শিষ্য লক্ষ্মীপতি, তাঁহার শিষ্য শ্রীমাধবেন্দ্র, আমরা ভক্তিসহকারে যথাক্রমে এই বৈষ্ণবসম্প্রদায়প্রবর্ত্তকগণের স্তব করি। শ্রীমাধবেন্দ্রের শিষ্য তিন জন (১)ঈশ্বরাচার্য্য (২)অদ্বৈতাচার্য্য ও (৩)নিত্যানন্দ, ইঁহারা জগদ্গুরু, আমরা ইঁহাদিগের অর্চ্চনা করি। ঈশ্বরশিষ্য ভগবান্ শ্রীচৈতন্যদেব, যিনি শ্রীকৃষ্ণের প্রেমভক্তি বিতরণ করিয়া জগদ্বাসিগণকে রক্ষা করিয়াছেন। আমরা তাঁহারও আরাধনা করি ॥ (গ)

अथ प्रमेयाण्युद्दिश्यन्ते—

**श्रीमध्वः प्राह विष्णुं परतममखिलाम्नायवेद्यञ्च विश्वं**
**सत्यं भेदञ्च जीवान् हरिचरणजुषस्तारतम्यञ्च तेषाम् ।**
**मोक्षं विष्ण्वङ्घ्रिलाभं तदमलभजनं तस्य हेतुं प्रमाणं**
**प्रत्यक्षादित्रयञ्चेत्युपदिशति हरिः कृष्णचैतन्यचन्द्रः ॥ ५**

## कान्तिमाला

एवं स्वगुरुपरम्परामाख्याय तत्प्रमेयाणि तावदुद्दिशति—श्रीमध्व इति। मध्वो मुनिरस्मत्पूर्वाचार्यो विष्णुं परतममखिलाम्नायवेद्यञ्चाह। तस्य सर्वजीवाभिन्नतां चिन्मात्राद्वितीयतयाम्नायालभ्यताञ्च निरस्यति—विश्वं भेदञ्च सत्यमाह। आविद्यकत्वात् प्रपञ्चस्य भेदस्य मृषेति परोत्प्रेक्षितं कुमतं निराकरोतीत्यर्थः। जीवान् बद्धमुक्तान् नित्यमुक्तान् (१) सर्वान् हरिचरणजुषो हरेर्दासानाह, तेषां हर्यात्मकत्वं निराकरोति। तेषां जीवानां तारतम्यं स्वरूपसाम्ये सत्यपि साधनोज्जृम्भितैः फलैः वैषम्यमाह। विदण्डिप्रतिपादितं फलतोऽपि (२) साम्यं निराकरोति। जीवानां विष्ण्वङ्घ्रिलाभं विष्णुसाक्षात्कारं मोक्षमाह, पराभिमतां तेषां विष्णुरूपतां निराकरोति। तस्य विष्णोरमलं निष्कामं यद्भजनं तत् तस्य मोक्षस्य हेतुमाह। ब्रह्माहमस्मीतिज्ञानस्य मोक्षहेतुतां निराकरोति। प्रत्यक्षादीनि त्रीणि स्वमते प्रमाणान्याह, तेभ्योऽधिकान्युपमानादीनि निराकरोति। इत्येतान्येव मध्वमुनिस्वीकृतानि नव प्रमेयाणि श्रीकृष्णचैतन्यहरि (३) स्तदन्वयगृहीतदीक्षः स्वशिष्याननुपदिशति। उभयत्र लट्प्रयोगस्तयोः (४) सत्त्वात्। जगत्प्राणो वायुर्देवो विष्णोरेकान्तीति केनोपनिषदि प्रसिद्धम्। यो हनुमान् सन् श्रीराघवेन्द्रं भीमः सन् श्रीयादवेन्द्रं मध्वः सन् पाराशर्यं श्रीमुनीन्द्रञ्च तत्तन्मतप्रतीपान् खण्डयन् प्रतोषयामास। यद्यपि श्रीकृष्णचैतन्य (५) ईश्वरस्तथापि तन्मतं सर्वोत्तमं वीक्ष्य तदन्वये दीक्षां स्वीचकार लोकसंग्रहेच्छुः। यत्र विशुद्धं द्वैतं हरेरात्ममूर्तित्वादिति च वक्ष्यते ॥ ५

---

(१) बद्ध-मुक्त-नित्यमुक्तान् इति 'घ' पुस्तके ।
(२) फलमपि इति 'ग' पुस्तके ।
(३) श्रीकृष्णचैतन्यचन्द्रो हरिः इति 'ग' पुस्तके ।
(४) लटः प्रयोगस्तयोरुभयोः इति 'ग' पुस्तके ।
(५) कृष्णचैतन्य इति 'ग' पुस्तके ।

## प्रभा

अथ स्वगुरुपरम्परानिरूपणानन्तरं प्रमेयाणि प्रतिपाद्याः पदार्था उद्दिश्यन्ते नाम्ना संकीर्त्यन्ते। तथा च वात्स्यायनकृतन्यायभाष्यं—"त्रिविधा चास्य शास्त्रस्य प्रवृत्तिः— उद्देशो लक्षणं परीक्षा चेति, तत्र नामधेयेन पदार्थमात्रस्य कथनमुद्देशः" १।१।२ इति। श्रीमध्वः श्रीमान् मध्वाचार्यो विष्णुं हरिं परतमं सर्वोत्तमं वस्तु प्रमेयम् अखिलाम्नायवेद्यं च वेदादिनिखिलशास्त्रप्रतिपाद्यञ्च प्राह। विष्णुं परतममित्यनेन सांख्यादिमतं निराकृतमखिलाम्नायवेद्यमिति चानुमानशरणानां कणभक्षाक्षचरणानां मतानि निराकृतानीति वेदितव्यम्। प्रपञ्चस्य मिथ्यात्वं भेदस्य च जीवानाञ्चाद्वयत्वमद्वैतवेदान्तसिद्धान्तसम्मतमपाकरोति—विश्वमिति। विश्वं जगत्, भेदं जीवेश्वरयोर्जीवानां जीवजगतोरीशजगतोर्जगदन्तर्गतानां पदार्थानां परस्परं भेदं सत्यं प्राहेति पूर्वेणान्वयः, एवं सर्वत्र, इति माध्वमते, स्वमते तु विष्णुना सह भेदमिति विशेषः। जीवान् सर्वान् हरिचरणजुषो विष्णुचरणकमलसेवकान् प्राह। तथाच श्रीवैष्णवसम्प्रदायगुरुणा श्रीजामातृमुनिनोपदिष्टं तत्र प्रणवव्याख्याने पाद्मोत्तरखण्डं यथा—

"मकारेणोच्यते जीवः क्षेत्रज्ञः परवान् सदा।
दासभूतो हरेरेव नान्यस्यैव कदाचन॥" इति

न चाद्वैतमतवज्जीवेश्वरयोरैक्यं वदति, तथा सति महान् प्रत्यवायो भवेत्, न च किञ्चिज्ज्ञो जीवः सर्वज्ञः परमेश्वरो भवितुमर्हति, न च भृत्यो राजाहमिति ब्रुवाणो राज्ञोऽनुग्रहं लभते, अपि तु ततो हानिमभ्युपैति। तदाह—

"घातयन्ति हि राजानो राजाहमितिवादिनः।
ददत्यखिलमिष्टञ्च स्वगुणोत्कर्षवादिनाम्॥" इति

तेषां जीवानां तारतम्यमुत्कृष्टापकृष्टभावं प्राह। परस्परं भिन्नानां जीवानां चित्त्वेनैकरूप्ये सत्यपि बद्धमुक्तादिप्रातिस्विकरूपेण पार्थक्यमस्ति। विष्णुङ्घ्रिलाभं विष्णोर्भगवतश्चरणलाभं पादपद्मप्राप्तिं मोक्षं तत्साक्षात्कारमिति यावत् प्राह। मोक्षस्तु सर्वतन्त्रसिद्धान्तः, विप्रतिपत्तिस्तु विशेषे। न च मोक्षो विष्णुप्रसादमन्तरेण सम्भवति, तथा च विष्णुपुराणम्—

"তস্মিন্ প্রসন্নে কিমিহাস্ত্যলভ্যং
ধর্মার্থকামৈরলমল্পকাস্তে।
সমাশ্রিতাদ্ ব্রহ্মতরোরনন্তা-
ন্নিঃসংশয়ং মুক্তিফলং প্রযান্তি॥" ১।১৭।৯১ ইতি।

স চ নিত্যঃ, ইতরে ত্রয়ঃ পুরুষার্থা অনিত্যাঃ, তদমলভজনমিতি—তস্য বিষ্ণোরমলং নিষ্কামং জ্ঞানকর্মাদ্যনাবৃতং বা যদ্ ভজনং সেবা, তদ্ধেতুং তস্য মোক্ষস্য হেতুং কারণং প্রাহ, ন চ তত্ত্বমস্যাদিবাক্যজন্যং জ্ঞানম্। প্রত্যক্ষাদিত্রয়ঞ্চেতি। প্রত্যক্ষমনুমানমাগমশ্চেতি ত্রিতয়ং প্রমাণং ন চ পরাভিমতমষ্টবিধম্, উপমানস্যার্থাপত্তেঃ সম্ভবস্য চানুমানেঽনুপলব্ধেশ্চ প্রত্যক্ষে ঐতিহ্যস্য চ শাব্দেঽন্তর্ভাবাত্ প্রমাণত্রিত্বমেব, নাতোঽধিকং ন বা ন্যূনমিতি। তথা চ তার্কিকরক্ষায়াং প্রমাণপ্রকরণে প্রত্যক্ষনিরূপণে—

"প্রত্যক্ষমেকং চার্বাকাঃ কণাদসুগতৌ পুনঃ।
অনুমানঞ্চ তচ্চাপি সাংখ্যাঃ শব্দঞ্চ তে উভে॥
ন্যায়ৈকদেশিনোঽপ্যেবমুপমানঞ্চ কেচন।
অর্থাপত্ত্যা সহৈতানি চত্বার্যাহুঃ প্রাভাকরাঃ॥
অভাবঃ ষষ্ঠান্যেতানি ভাট্টা বেদান্তিনস্তথা।
সম্ভবৈতিহ্যযুক্তানি তানি পৌরাণিকা জগুঃ॥" ইতি

হরিঃ শ্রীচৈতন্যচন্দ্র উপদিশতি। মাধ্বমতং শ্রীচৈতন্যসম্মতম্॥ ৫

## বঙ্গানুবাদ

এই গ্রন্থে কতগুলি প্রমেয় অর্থাৎ প্রতিপাদ্য পদার্থ, নামোল্লেখপূর্ব্বক তাহাই কথিত হইতেছে। শ্রীমধ্বাচার্য্য নয়টী প্রমেয় বলেন, তাহাই ভগবান্ হরি শ্রীকৃষ্ণচৈতন্য লোককে উপদেশ দিয়াছেন। সেই নয়টী প্রমেয় যথাক্রমে নয়টী অধ্যায়ে প্রদর্শিত হইয়াছে যথা—(১) একমাত্র বিষ্ণুই পরতম—শ্রেষ্ঠতম বস্তু। (২) বিষ্ণু বেদাদি সকল শাস্ত্রের প্রতিপাদ্য। (৩) জগতের সত্যত্ব। (৪) ঈশ্বর হইতে জীবভেদের সত্যত্ব। (৫) জীবসমূহ ভগবানের সেবক। (৬) জীবগণের তারতম্য অর্থাৎ উৎকৃষ্টাপকৃষ্টভাব। (৭) বিষ্ণুপাদপদ্মলাভই

মুক্তি। (৮) বিশুদ্ধভক্তির মোক্ষহেতুত্ব। (৯) এই প্রমেয়ের কারণ হইতেছে (ক)প্রত্যক্ষ, (খ)অনুমান ও (গ)শব্দ এই তিনটী প্রমাণ ॥ ৫

पारतम्यप्रकरणम्

**तत्र श्रीविष्णोः परतमत्वं यथा श्रीगोपालोपनिषदि—**

**"तस्मात् कृष्ण एव परो देवस्तं ध्यायेत् तं रसेत् तं भजेत् तं यजेत्" ॥ १ । इति (क)**

## कान्तिमाला

एवमुद्दिष्टानि प्रमेयाणि क्रमात् सप्रमाणानि कर्तुं प्रवर्तते—तत्र श्रीविष्णोरित्यादिभिः। परतमत्वं श्रेष्ठतमत्वम्। तस्मादिति पूर्वोक्तादर्थप्रचयाद्धेतोः, तं मन्त्रं तद्वाच्यतया (१) इ धा सन्तं ध्यायेत् स्मरेत्, रसेत् जपेत्, भजेत् परिचरेत्, यजेत् अर्चयेत् ॥ (क)

## प्रभा

**तत्र तेषु प्रमेयेषु मध्ये आदौ श्रीविष्णोर्भगवतः परतमत्वं श्रेष्ठतमत्वं प्रतिपाद्यते इति शेषः। तत्र श्रीगोपालपूर्वतापनीयोपनिषदोऽन्तिमवाक्यं प्रमाणत्वेनाङ्गीकरोति—यथेति। तस्मात् पूर्वस्मात् कारणात् कृष्ण एव परः श्रेष्ठो देवः। कृष्णशब्दश्चात्र शब्दब्रह्मगूढ़परब्रह्मनन्दनन्दनवाचकतायां रूढ़ः। तं ध्यायेत् एकाग्रचेतसा चिन्तयेत् स्मरेदिति यावत्। तं रसेत्—विभावादिभिरनुभवेत्। भजेत् सेवेत, यजेत् पूजयेत् इति ॥ (क)**

## বঙ্গানুবাদ

নয়টী প্রমেয়ের মধ্যে সর্ব্বাগ্রে ভগবান্ শ্রীহরির শ্রেষ্ঠতমত্ব প্রতিপাদিত হইতেছে। শ্রীগোপালপূর্ব্বতাপনীয় উপনিষদের অন্তে এইরূপ বাক্য আছে—সেইহেতু ভগবান্ কৃষ্ণই একমাত্র শ্রেষ্ঠ দেবতা, তাঁহার ধ্যান করিবে। সেই রসস্বরূপ ভগবান্‌কে বিভাব, অনুভাবাদির দ্বারা আস্বাদন করিবে, তাঁহার সেবা করিবে এবং তাঁহার পূজা করিবে ॥ (ক)

**श्वेताश्वतरोपनिषदि च—**

---

(१) मन्त्रतद्वाच्यतया इति 'ख' तथा 'ग' पुस्तके।

"ज्ञात्वा देवं सर्वपाशापहानिः
क्षीणैः क्लेशैर्जन्ममृत्युप्रहाणिः।
तस्याभिध्यानात् तृतीयं देहभेदे
विश्वैश्वर्यं केवलमाप्तकामः" ॥१।११। इति (ख)
"एतज् ज्ञेयं नित्यमेवात्मसंस्थं
नातः परं वेदितव्यं हि किञ्चित्" ॥१।१२ इति च (ग)

## कान्तिमाला

ज्ञात्वेति। शास्त्रात् सद्गुरुतात्, देवं परेशं ज्ञात्वावस्थितस्य मुमुक्षोः सर्वेषां देहदैहिकममतापाशानां हानिर्भवति। तत्पाशजन्यैः क्लेशैः क्षीणैर्विशिष्टस्य तस्याः प्रारब्धभोगपूर्तेः (२) पुनःपुनर्जायमानस्य जन्ममृत्युप्रहाणिर्भवति। विड़ालीदन्तस्पर्शेन तदर्भकस्येव जन्मादिना दुःखं तस्य न भवतीत्यर्थः। अथोत्तरोत्तरं तस्य देवस्याभिध्यानाद् देहस्य लिङ्गशरीरस्य भेदे विनाशे सति चान्द्रब्राह्माद्यपेक्षया तृतीयं भागवतं पदं स देवध्यायी लभते विमुक्तो भवतीत्यर्थः। कीदृशं तृतीयं तदित्याह—विश्वैश्वर्यं कृत्स्नविभूतिकं केवलं प्रकृत्यस्पृष्टं, ततः स देवध्यायी आप्तकामः पूर्णाभिलाषो भवति॥ (ख)

एतद्देवात्मकं वस्तु ज्ञेयं, अतः परमन्यद्वेदितव्यं किञ्चिन्नास्ति तस्यैव पारम्यात्॥ (ग)

## प्रभा

देवं सर्वाध्यक्षं सर्वेश्वरं हरिं वेदाज् ज्ञात्वा स्थितस्य मुमुक्षोः सर्वेषां देहदैहिकममतापाशानां हानिश्छेदो भवति। तत्पाशहेतुकैः क्लेशैः अविद्यास्मितारागद्वेषाभिनिवेशैः क्षीणैः विशिष्टस्य तस्य प्रारब्धभोगपूर्तेः पुनः पुनर्जायमानस्य जन्ममृत्युप्रहाणिर्भवति—विड़ालीदन्तस्पर्शेन तदर्भकस्येव जन्मादिभ्यां तस्य क्लेशो न भवतीत्यर्थः। अथोत्तरोत्तरं तस्य देवस्य स्वयंप्रकाशस्य भगवतोऽभिध्यानाद् आभिमुख्येन ध्यानात् तैलधारावन्नैरन्तर्येण स्मरणात्लिङ्गादिदेहस्य भेदे प्रध्वंसे सति चान्द्रब्राह्माद्यपेक्षया तृतीयं भागवतं पदं स देवज्ञो विन्दतीति शेषः। तृतीयं तत् कीदृक्—विश्वैश्वर्यम् अनन्तनित्यदिव्यविभूतिकं केवलप्रकृतिगन्धेनाप्यस्पृष्टम्। ततः स देवज्ञ आप्तकामो भवति। (ख)

---

(२) तस्याप्रारब्धभोगपूर्तेः इति 'घ' पुस्तके।

এতৎ নিত্যম্ অবিনাশি, আত্মসংস্থম্ আত্মনি বর্তমানং ব্রহ্ম জ্ঞেয়ং মুমুক্ষুভিঃ উপাস্যম্। হি যস্মাৎ, অতঃ অস্মাদ্ ব্রহ্মণঃ স্বরূপেণ গুণৈশ্চানন্ত্যাৎ পরম্ অন্যৎ কিঞ্চিদ্ বেদিতব্যং জ্ঞাতব্যং ন অস্তি।

"ভোক্তা ভোগ্যং প্রেরিতারঞ্চ মত্বা
সর্বং প্রোক্তং ত্রিবিধং ব্রহ্মমেতৎ॥ ইতি চাপরার্দ্ধম্।

ভোক্তা চিৎ জীবঃ, ভোগ্যম্ অচিদ্বস্তু প্রকৃত্যাদিকং সর্বং. প্রেরিতারং প্রেরয়িতারঞ্চ অন্তর্যামিণমীশ্বরমিত্যর্থঃ, মত্বা জ্ঞাত্বা সর্বং নিখিলং প্রোক্তং সর্বজ্ঞৈঃ প্রকর্ষেণ কথিতম্ এতৎ ত্রিবিধং তিস্রো বিধাঃ প্রকারা ভোক্তৃভোগ্যপ্রেরয়িতৃরূপা যস্মিন্ তৎ ত্রিবিধং ব্রহ্ম ব্রহ্ম ইত্যর্থঃ, শক্তিশক্তিমতোরভেদাৎ। ব্রহ্মমিতি ছান্দসঃ॥ (গ)

বঙ্গানুবাদ

ভগবান্ শ্রীকৃষ্ণ সকলের ঈশ্বর—এইরূপ জানিলে মুমুক্ষু ব্যক্তির সমস্ত বন্ধন মোচন হয়। অবিদ্যা, অস্মিতা, রাগ, দ্বেষ ও অভিনিবেশরূপ পাঁচটী ক্লেশ ক্ষয় প্রাপ্ত হইলে আর জন্ম ও মৃত্যু হয় না। ভগবানের নিরন্তর স্মরণ করিতে করিতে লিঙ্গশরীরাদির ধ্বংস হয় এবং চান্দ্র ও ব্রাহ্মপদ অপেক্ষা তৃতীয় শুদ্ধসত্ত্বময় অনন্তনিত্যবিভূতিযুক্ত প্রকৃতিসম্বন্ধরহিত ভাগবতপদ লাভ হইলে সকল অভীষ্ট পূর্ণ হয়॥ (খ)

সকলের আত্মাতে বিরাজমান নিত্য ভগবান্ই একমাত্র জ্ঞাতব্য, ইহা অপেক্ষা অন্য জ্ঞাতব্য কিছুই নাই॥ (গ)

শ্রীগীতাসু চ—

"মত্তঃ পরতরং নান্যৎ কিঞ্চিদস্তি ধনঞ্জয়!" ॥৭।৭ ইতি (ঘ)

কান্তিমালা

মত্ত ইতি। পরতরং মত্তোঽন্যৎ কিঞ্চিন্নাস্তীতি মামেব সর্বেশং বিদ্ধীত্যর্থঃ। পরমেব পরতরং স্বার্থে প্রত্যয়ঃ তরঃ (১)॥ (ঘ)

প্রভা

মদন্যস্য কস্যচিদপি শ্রৈষ্ঠ্যাভাবাদহমেব মদন্যসর্বাশ্রয় ইত্যাহ—ময়ি

(১) তরপ্প্রত্যয়ঃ।

इति। हे धनञ्जय! मत्तः वासुदेवात् अन्यत् परतरं श्रेष्ठतरं किञ्चिद् वस्तु न अस्ति। अहमेव सर्वश्रेष्ठं वस्तु इत्यर्थः। 'यस्मात् परं नापरमस्ति किञ्चित्' (श्वेता० ३।९) इति श्रुतेः, 'तथाऽन्यप्रतिषेधात्' (व्या० सू० ३।२।३६) इति न्यायाच्च। 'मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव' इति श्लोकार्द्धम् ॥ (घ)

বঙ্গানুবাদ

হে অর্জ্জুন! আমা অপেক্ষা অন্য কোন পরতত্ত্ব নাই॥ (ঘ)

## हेतुत्वाद्विभुचैतन्यानन्दत्वादिगुणाश्रयात् ।
## नित्यलक्ष्म्यादिमत्त्वाच्च कृष्णः परतमो मतः ॥ ६

### कान्तिमाला

यैर्हेतुभिर्विष्णोः पारतम्यं, तानाह—हेतुत्वादिति। हेतुत्वं प्रपञ्चनिमित्तोपादानत्वम्। तत्र पराख्यशक्तिमत्त्वेन निमित्तत्वं, प्रधानजीवाख्यशक्तिमत्त्वेन तूपादानत्वं बोध्यं, स्फुटार्थमन्यत् ॥ ६

### प्रभा

इदानीं विष्णोः पारतम्यकारणभूतान् हेतूनाह—हेतुत्वादिति। कृष्णः परतमो हेतुत्वात्, विभुचैतन्यानन्दत्वादिगुणाश्रयात्, नित्यलक्ष्म्यादिमत्त्वाच्चेति। तत्राद्यहेतुं विभजते—हेतुत्वादिति। निखिलजगन्निमित्तोपादानकारणत्वात्, तत्र निमित्तत्वं स्वरूपशक्त्या, उपादानत्वं मायाजीवशक्तिभ्यां, शक्तिशक्तिमतोरभेदात् श्रीविष्णोरेव निमित्तत्वमुपादानत्वञ्च सिध्यतः। शक्तिश्च सा त्रिधा, अन्तरङ्गा बहिरङ्गा तटस्था च; तत्रान्तरङ्गा स्वरूपशक्तिः, बहिरङ्गा मायाशक्तिः, तटस्था जीवशक्तिश्चेति। तथा चोक्तं श्रीविष्णुपुराणे—

"विष्णुशक्तिः परा प्रोक्ता क्षेत्रज्ञाख्या तथा परा।
अविद्याकर्मसंज्ञाऽन्या तृतीया शक्तिरिष्यते॥" ६।७।६१

स्वरूपानुबन्धिनित्यदिव्यविभुत्वादिकं प्रतिपादयति—विभुचैतन्येति। विभुः सर्वगतो यश्चैतन्यानन्दत्वादिगुणस्तदाश्रयात्। नित्यत्वात्, विभुत्वात्, सर्वाश्रयत्वात्, स्थूलसूक्ष्मप्राकृतवस्त्वतिरिक्तत्वात्, प्रत्यग्रूपत्वात्, स्वप्रकाशत्वात् सर्वश्रुतिसमन्वयसिद्धत्वाच्च सच्चिदानन्दलक्षणपरतत्त्वस्वरूपोऽपि स्वरूपानुबन्धि-

नभिव्यक्तसर्वगुणकत्वात्तथा, इति न काचित् क्षतिः। अन्यथा परं व्याकुप्येत्। एवमुक्तं श्रीलघुभागवतामृते श्रीरूपगोस्वामिपादैः—

'तस्मात् कथं तारतम्यं तेषां व्याख्यायते त्वया।
अत्रोच्यते परेशत्वात् पूर्णा यद्यपि तेऽखिलाः॥
तथाप्यखिलशक्तीनां प्राकट्यं तत्र नो भवेत्।
अंशत्वं नाम शक्तीनां सदाल्पांशप्रकाशिता॥
पूर्णत्वञ्च स्वेच्छयैव नानाशक्तिप्रकाशिता।
शक्तिरैश्वर्यमाधुर्यकृपातेजोमुखा गुणाः॥'१४॥ (श्रीकृष्णप्रकरणे ४४-४७)

বঙ্গানুবাদ

যদ্যপি সমস্ত অবতারে ভগবান্ বিষ্ণুর পূর্ণতা তুল্য, তথাপি তাঁহার শক্তির আবির্ভাব ও অনাবির্ভাববশতঃ তারতম্য হইয়া থাকে॥ ১৪

तत्र, विष्णोः सार्वत्रिकी पूर्तिर्यथा वाजसनेयके—
"पूर्णमदः पूर्णमिदं पूर्णात् पूर्णमुदच्यते।
पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते॥" (बृह० ५।१।१) इति। (क)

कान्तिमाला

पूर्णमिति। अदोऽवतारिरूपम्, इदम् अवताररूपम्, उभयं पूर्णं सर्वशक्तिमत्, पूर्णादवतारिरूपात् पूर्णमवताररूपं लीलाविस्ताराय स्वयमुदच्यते प्रादुर्भवति। तल्लीलापूर्तौ पूर्णस्यावताररूपस्य पूर्णं स्वरूपमादाय स्वस्मिन्नैक्यं नीत्वा, पूर्णमवतारिरूपमन्यत्राविलीनं सदवशिष्यते तिष्ठतीत्यर्थः। अत्र ऐक्यमुक्तं,पार्थक्ये न स्थितिस्तोच्यते,तदिदं यथेष्टं बोध्यम्॥(क)

प्रभा

वाजसनेयके बृहदारण्यके। पूर्णमिति। अदः अवतारिरूपं पूर्णं सर्वशक्तिमत्। इदम् अवताररूपं पूर्णं सर्वशक्तिमत्। पूर्णात् अवतारिरूपात् पूर्णम् अवताररूपम् उदच्यते प्रादुर्भवति। पूर्णस्यावताररूपस्य पूर्णं स्वरूपमादाय नीत्वा लीलायाः परं पूर्णमवतारिरूपमेवाशिष्यते। अवतारित्वं नाम मूलरूपत्वमंशित्वमिति यावत्, स्वेच्छया नानाशक्तिप्रकाशित्वमित्यर्थः। तथा चोक्तं ग्रन्थकृद्भिः पीठकभाष्ये—'यथैकस्य षट्शास्त्रज्ञस्य विदुषः क्वचित् कृत्स्नशास्त्रोद्ग्राहिणः सर्वज्ञत्वं प्रतीयते, क्वचिदकृत्स्न-तद्-

ग्राहिणी द्विकतद्ग्राहिणाश्च सर्वज्ञकल्पत्वञ्च, इत्येवमेकस्य बहुल्यशक्तिव्यक्ति-सव्यपेक्षिणोऽंशित्वांऽशत्वादीनि।' एवमेव भगवतोऽंशित्वांऽशत्वादीनि विज्ञेयानि॥ (क)

বঙ্গানুবাদ

অবতারিরূপ ও অবতাররূপ পূর্ণ অর্থাৎ সর্ব্বশক্তিযুক্ত, অবতারিরূপ হইতে অবতাররূপ লীলাপূরণের জন্য আবির্ভূত হইয়া থাকেন। অবতাররূপের পূর্ণ-স্বরূপ গ্রহণ করিয়া অবতারিরূপই অবশিষ্ট থাকে, পূর্ণস্বরূপকে অবতারী ও অংশকে অবতার বলা হয়। ভগবান্ কৃষ্ণ সর্ব্বাবতারী, মৎস্য, কূর্ম্মপ্রভৃতি অবতার॥ (ক)

**महावाराहे च—**

**"सर्वे नित्याः शाश्वताश्च देहास्तस्य परात्मनः।**
**हानोपादानरहिता नैव प्रकृतिजाः क्वचित्॥**
**परमानन्दसन्दोहा ज्ञानमात्राश्च सर्वतः।**
**सर्वे सर्वगुणैः पूर्णाः सर्वदोषविवर्जिताः॥" इति। (ख)**

**कान्तिमाला**

सर्व इति। शाश्वता जगति पुनःपुनराविर्भाविनो देहाः स्वरूपानुबन्धिनो विग्रहाः, स्वरूपानुबन्धित्वादेव हानेन उपादानेन च वर्जिता। स्फुटार्थमन्यत्॥ (ख)

**प्रभा**

**महावाराहे** तदाख्यपुराणे। सर्व इति। तस्य परात्मनः परमेश्वरस्य भगवतः कृष्णस्य सर्वे देहा नित्याः सनातनाः, शाश्वता जगति पुनः पुनराविर्भाविनः। उपलक्षणञ्चैतत्—'जायते, अस्ति, वर्द्धते, विपरिणमते, अपक्षीयते, नश्यति' इति यास्कपरिपठितानां षड्विधभावविकाराणां निषेधो बोद्धव्यः। हानोपादानरहिता इति। सच्चिदानन्दरूपत्वात् त्यागग्रहणविवर्जिताः। एते देहाः क्वचित् प्रकृतिजाः प्रकृतिसम्भूता न एव भवन्ति; अप्राकृता भगवद्देहा इति भावः। देहास्तस्येत्यत्राभेदे षष्ठी, चैतन्यमात्मनः स्वरूपमित्यादिवत्।

परमेति। सर्वतः—देशतः, कालतः, स्वरूपतश्च सर्वथा परमानन्दसन्दोहाः

परमानन्दसमष्टिभूताः, ज्ञानमालाश्च केवलं ज्ञानस्वरूपाः,[1] सर्वगुणैरशेषकल्याणगुणगणैः पूर्णाः, सर्वदोषविवर्जिताः मुग्धत्वादिसर्वदोषैश्च रहिताः ॥ (ख)

বঙ্গানুবাদ

মহাবরাহপুরাণে উক্ত হইয়াছে যথা,—ভগবান্ শ্রীকৃষ্ণের সমস্ত অবতারদেহই সনাতন এবং পুনঃ পুনঃ জগতে আবির্ভাবশীল। সেই সমস্ত দেহ ত্যাগ ও গ্রহণযোগ্য নহে এবং প্রকৃতি হইতে উৎপন্ন নহে ॥

ভগবানের সমস্ত দেহ সর্ব্বপ্রকারে পরমানন্দসমষ্টিস্বরূপ এবং জ্ঞানরূপ, বিবিধ কল্যাণগুণপূর্ণ এবং মোহপ্রভৃতি-দোষরহিত ॥ (খ)

अथ श्रियः सा यथा श्रीविष्णुपुराणे—
"एवं यथा जगत्स्वामी देवदेवो जनार्दनः ।
अवतारं करोत्येष तथा श्रीस्तत्सहायिनी ॥
पुनश्च पद्मादुद्भूता आदित्योऽभूद् यदा हरिः ।
यदा च भार्गवो रामस्तदाभूद्धरणी त्वियम् ॥
राघवत्वेऽभवत् सीता रुक्मिणी कृष्णजन्मनि ।
अन्येषु चावतारेषु विष्णोरेषा सहायिनी ॥
देवत्वे देवदेहेयं मनुष्यत्वे च मानुषी ।
विष्णोर्देहानुरूपां वै करोत्येषात्मनस्तनुम् ॥" १।९।१४०-१४३
इति । (ग)

कान्तिमाला

अथेति । सा पूर्तिः । तामुदाहरति—एवं यथा इति । प्रकटार्थम् । देवत्व इति । करोति प्रकटयति ॥ (ग)

प्रभा

सा पूर्तिः पूर्णतेत्यर्थः । एवमिति । एवमित्यंरूपेण यथा जगत्स्वामी जगतां प्रभुर्देवदेवो देवानां ब्रह्मादीनामपि देवो जनार्दनः कृष्णोऽवतारं करोत्यवतरति, तथा श्रीर्लक्ष्मीस्तत्सहायिनी भगवती नित्यसहाया । पुनश्च पुनरपि

**যদা হরিরাদিত্যঃ অদিতিপুত্রো বামনোঽভবৎ, তদা শ্রীঃ পদ্মাদুদ্ভূতাঽভবৎ, যদা চ হরির্ভার্গবো ভৃগুপুত্রো রামঃ পরশুরামোঽভবৎ, তদা ইয়ন্তু লক্ষ্মীর্ধরণী পৃথিবীরূপাঽভবৎ। ইয়ং লক্ষ্মী রাঘবত্বে রামাবতারে সীতাঽভবৎ, কৃষ্ণজন্মনি কৃষ্ণাবতারে রুক্মিণ্যভবৎ, অন্যেষ্বেতদতিরিক্তেষু মৎস্যকূর্মাদ্যবতারেষু চ এষা লক্ষ্মীর্বিষ্ণোঃ সহায়িনী নিত্যসহায়ভূতা। বিষ্ণোর্দেবত্বে দেবাবতারেঽপ্রকট-লীলায়ামিয়ং লক্ষ্মীর্দেবদেহা দেবশরীরা, মনুষ্যত্বে বিষ্ণোর্মানুষাবতারে প্রকট-লীলায়ামিয়ঞ্চ মানুষী মানব্যভবৎ। ইতি পূর্বপূর্বকল্পীয়াবতারদৃষ্ট্যা ইতঃ পরমপি ভবিষ্যতি। এষা লক্ষ্মীর্বিষ্ণোর্দেহানুরূপাং দেহসৃষ্টীমাত্মনঃ তনুং শরীরং করোতি প্রকটয়তি॥ (গ)**

## বঙ্গানুবাদ

লক্ষ্মীর পূর্ত্তি অর্থাৎ পরিপূর্ণতাবিষয়ে বিষ্ণুপুরাণে কথিত হইয়াছে যথা,—এইরূপে দেবশ্রেষ্ঠ জগৎস্বামী জনার্দ্দন যেমন অবতীর্ণ হইয়া থাকেন, তাঁহার সহায়ভূতা লক্ষ্মীদেবীও সেইরূপ অবতীর্ণ হইয়া থাকেন।

আবার যখন হরি অদিতিপুত্র বামনরূপে আবির্ভূত হইয়াছিলেন তখন লক্ষ্মী পদ্ম হইতে প্রকাশিত হইয়াছিলেন, এবং আবার যখন ভগবান্ পরশুরামরূপে অবতীর্ণ হইয়াছিলেন, তখন লক্ষ্মীদেবী ধরণীরূপে আবির্ভূত হইয়াছিলেন।

রামাবতারে লক্ষ্মী সীতারূপে, কৃষ্ণাবতারে রুক্মিণীরূপে আবির্ভূত হইয়াছিলেন। লক্ষ্মীদেবী অন্য সমুদায় অবতারে বিষ্ণুর সহায়া ছিলেন।

বিষ্ণু দেবদেহরূপে আবির্ভূত হইলে লক্ষ্মী দেবদেহা, মনুষ্যদেহরূপে আবির্ভূত হইলে লক্ষ্মী মানুষী হইয়া থাকেন। বিষ্ণুর দেহানুরূপ লক্ষ্মী শরীর গ্রহণ করিয়া থাকেন॥ (গ)

# স্যাৎ স্বরূপসতী পূর্তিরিহৈক্যাদিতি বিন্মতম্ ॥১৫

## কান্তিমালা

**স্যাৎ ইতি। এষু বাক্যেষু সৈব সর্বত্রেতি সর্বেষাং প্রাদুর্ভাবানাম্ অভেদাৎ সর্বেষু তেষু স্বরূপসতী পূর্তিরস্ত্যেবৈতি শ্রুতিযুক্তিবিদাং মতম্ ইত্যর্থঃ। অন্যথা স্বরূপপূর্তেরভাবে (১) তদভেদো গৌণঃ স্যাৎ॥ ১৫**

---

(১) 'স্বরূপপূর্তেরভাবে'—ইতি পাঠঃ 'গ' পুস্তকে নাস্তি।

प्रभा

ऐक्यादिष्णोरवताराणामेकरूपत्वादिह शास्त्रे पूर्तिर्भगवतः पूर्णता स्वरूप-सती स्वाभाविकी स्यादिति विन्मतं विदां पण्डितानां सम्मतम् ॥ १५

বঙ্গানুবাদ

অবতারসমূহের ঐক্যহেতু পূর্ণতা স্বাভাবিকী, ইহা পণ্ডিতগণের অভিমত ॥১৫

**अथ तथापि तारतम्यम्, तत्र श्रीविष्णोस्तद् यथा श्रीभागवते—**

**"एते चांशकलाः पुंसः कृष्णस्तु भगवान् स्वयम् ॥" इति । (क)**

## कान्तिमाला

अथेति । यद्यप्यविशेषा पूर्तिरस्ति तथापि तारतम्यमंशांशिभावोऽप्यस्ति इत्यर्थः । एते चेति । एते चतुर्विंशतिः, पुंसो गर्भोदशायिनो(१)ऽंशकलाः कथिताः । तन्मध्यपठितः श्रीकृष्णस्तु (२) स्वयं भगवान् अनन्यापेक्षिरूपो मूलमित्यर्थः ॥ (क)

प्रभा

यद्यपि विलासाः सांशाश्च स्वयंरूपवत् पूर्णास्तथाप्यभिव्यक्तानभिव्यक्त-सर्वगुणकत्वात्तारतम्यमंशांशिभावोऽस्ति । श्रीविष्णोः स्वयंप्रभोः श्रीकृष्णस्य । तत् तारतम्यम् । एत इति । एते पूर्वोक्ताः कुमाराद्याश्चतुर्विंशतिसंख्यकाः चकारादनुक्ताश्च हयग्रीवादयः पुंसो द्वितीयपुरुषावतारस्य गर्भोदशायिनः प्रद्युम्नस्य सहस्रशीर्ष्णः केचिदंशाः केचित् कलाः । अंशत्वं नामाविर्भावितयथा-प्रयोजनमल्पशक्तित्वम् । अंशा मत्स्यकूर्मवराहाद्याः, कलाः कुमारनारदा-दयश्च । अत्र प्राचां कारिकाः—

'नृसिंहो जामदग्न्यश्च कल्की पुरुष एव च ।
भगवत्त्वे च तत्रादैश्वर्यस्य प्रकाशकाः ॥
नारदोऽथ तथा व्यासो वराहो बुद्ध एव च ।
धर्माणामेव वैविध्यादमी धर्मप्रदर्शकाः ॥
रामो धन्वन्तरिर्यज्ञः पृथुः कीर्तिप्रदर्शिनः ।
बलरामो मोहिनी च वामनः श्रीप्रधानकाः ॥

---

(१) 'गर्भोदकशायिनः'—इति 'ग' पुस्तके ।

(२) 'कृष्णस्तु'—इति 'ग' पुस्तके ।

श्रीरत्न सौन्दर्यम् ।

दत्तात्रेयश्च मत्स्यश्च कुमारः कपिलस्तथा ।
ज्ञानप्रदर्शका एते विज्ञातव्या मनीषिभिः ॥
नारायणो नरश्चेति कूर्मश्च ऋषभस्तथा ।
वैराग्यदर्शिनो ज्ञेयास्तत्तत्कर्मानुसारतः ॥
कृष्णः पूर्णषड़ैश्वर्यमाधुर्याणां महोदधिः ।
अन्तर्भूतसमस्तावतारो निखिलशक्तिमान् ॥' इति । (क)

बङ्गानुवाद

যদ্যপি ভগবানের সকল অবতারই পূর্ণ, তথাপি শক্তির প্রকাশের তারতম্যানুসারে অংশাংশিভাব সিদ্ধ হয়। তদ্বিষয়ে শ্রীমদ্‌ভাগবতে ভগবান্ শ্রীকৃষ্ণের তারতম্য উক্ত হইয়াছে,—হিরণ্যগর্ভের স্রষ্টা গর্ভোদশায়ী প্রদ্যুম্ননামক দ্বিতীয় পুরুষের অবতারসমূহের মধ্যে কেহ অংশ ও কেহ কলা। কিন্তু কৃষ্ণ হইতেছেন স্বয়ং ভগবান্॥ (ক)

"अष्टमस्तु तयोरासीत् स्वयमेव हरिः किल ॥" इति च । (ख)

कान्तिमाला

अष्टमस्त्विति । तयोर्देवकीवसुदेवयोः ॥ (ख)

प्रभा

तु-शब्दः पृथगुपक्रमार्थः । 'तु स्याद्भेदेऽवधारणे' इत्यमरः । गर्भोदशायिप्रद्युम्नादाविर्भवत्सु मत्स्यकूर्मादिषु मध्ये कृष्णः पठितस्तथापि न स तदवतारः, किन्तु स्वयं भगवान् तदादिसर्वमूलभूत इत्यर्थः । अष्टमेति । तयोर्देवकीवसुदेवयोः, अष्टमः पुत्रस्तु स्वयमेव हरिरासीत्, तत्र तु स्वयमेव भगवान्, न तु भगवतः प्रादुर्भूततया, न वा भगवत्ताध्यासेन । तथा चोक्तं ब्रह्मसंहितायां —

'ईश्वरः परमः कृष्णः सच्चिदानन्द ईश्वरः ।
अनादिरादिर्गोविन्दः सर्वकारणकारणः ' ५।१

श्रीभागवते च—

'गोप्यस्तपः किमाचरन् यदमुष्य रूपं
लावण्यसारमसमोर्द्ध्वमनन्यसिद्धम् ।

दृग्भिः पिबन्त्यनुसवाभिनवं दुराप-
मेकान्तधाम यशसः श्रिय ऐश्वरस्य॥' १०।४०।१४। इति।

तस्मात् सर्वदाभिव्यक्तशक्तिकत्वात् कृष्णस्यैव स्वयंरूपत्वं सिद्धम्॥ (ख)

বঙ্গানুবাদ

স্বয়ং শ্রীহরি, দেবকী ও বসুদেবের অষ্টম-পুত্ররূপে আবির্ভূত হইয়াছিলেন॥ (খ)

अथ श्रियस्तद् यथा पुरुषबोधिन्यामथर्वोपनिषदि—

"गोकुलाख्ये माथुरमण्डले" इत्युपक्रम्य, "द्वे पार्श्वे चन्द्रावली राधिका च" इत्यभिधाय परत्र, "यस्या अंशे लक्ष्मीदुर्गादिका शक्तिः"॥ इति। (ग)

## कान्तिमाला

अथेति। श्रियस्तत् तारतम्यम्। गोकुलाख्य इति। यस्याः अंशिन्याः श्रीराधायाः लक्ष्म्यादयोऽंशा इत्यर्थो विस्फुटः। दुर्गाऽत्र मन्त्रराजाधिष्ठात्री, न तु प्राकृती॥ (ग)

## प्रभा

श्रिया लक्ष्म्याः, तत् तारतम्यं, पुरुषबोधिन्यां पुरुषस्वरूपप्रतिपादिकायामथर्वोपनिषदि। चन्द्रावली राधिका च द्वे पार्श्वे पार्श्वस्थानीये। यस्या अंशिन्याः श्रीराधिकायाः अंशे लक्ष्मीर्वैकुण्ठेश्वरी रमा, दुर्गा अष्टादशाक्षर-मन्त्रराजाधिष्ठात्री, तदादिका शक्तिर्वर्तते, आदिशब्देनात्र भूलीलादयो ग्राह्याः॥ (ग)

বঙ্গানুবাদ

লক্ষ্মীরও তারতম্য অর্থাৎ অংশাংশিভাবসম্বন্ধে পুরুষস্বরূপপ্রতিপাদক অথর্বোপনিষদে উক্ত হইয়াছে যথা,—উপক্রমে গোকুলনামক মথুরামণ্ডলসম্বন্ধে বলিয়া চন্দ্রাবলী ও রাধিকা দুই পার্শ্ব—এইরূপ বলার পর যে শ্রীরাধিকার অংশে লক্ষ্মী, দুর্গা অর্থাৎ অষ্টাদশাক্ষরা মন্ত্ররাজাধিষ্ঠাত্রীপ্রভৃতি শক্তি বিদ্যমান আছেন, এইরূপ বলিয়াছেন॥ (গ)

गौतमीयतन्त्रे च—

"देवी कृष्णमयी प्रोक्ता राधिका परदेवता।
सर्वलक्ष्मीमयी सर्वकान्तिः सम्मोहिनी परा॥" इति। (घ)

## कान्तिमाला

देवीति। राधिका देवी परेत्यन्वयः। अतः कृष्णमयी कृष्णात्मिका, तथापि परदेवता कृष्णार्चिका सर्वलक्ष्मीमयी, पुरुषबोधिनीश्रुतेः, निखिलानां लक्ष्मीणामंशिनी, सर्वासां तासां कान्तिरिच्छा पुंस्त्वलाभिलाषो यस्यां सा, सम्मोहिनी कृष्णानुरञ्जिका ॥ (घ)

## प्रभा

देवीति। राधिका परेत्यन्वयः। देवी देवस्य कृष्णस्य पट्टमहिषी। भेदप्राप्तं निवारयितुमाह—कृष्णमयीति। कृष्णमयी कृष्णाभिन्ना। 'स्वत्त्वं तत्त्वं परत्वञ्च तत्र त्वयमहं किल' इत्यादिवचनात्। एवमपि परदेवता कृष्ण एव। सर्वलक्ष्मीमयी सर्वासां लक्ष्मीणां कान्तावर्गाणाञ्चांशिनी, यस्या अंशे लक्ष्मीदुर्गादिका शक्तिरित्युक्तेः, सर्वकान्तिः सर्वासां तासां कान्तिराभा यस्यां सा, सम्मोहिनी कृष्णानुरञ्जिका। परा परतमा, सर्वांशिनीत्वात्। 'परास्य शक्तिर्विविधैव श्रूयते' इति श्रुतेः।

'याऽतीतगोचरा वाचां मनसाञ्चाविशेषणा।
ज्ञानिज्ञानपरिच्छेद्या वन्दे तामीश्वरीं पराम्' ॥

इति विष्णुपुराणाच्च। या भगवदभिन्नाऽभिहिता या च ह्लादिनीत्यादिना विशेषिता सा परैव राधिकेश्वरीति सिद्धम् ॥ (घ)

## বঙ্গানুবাদ

শ্রীরাধিকা পরতমা, তিনি শ্রীকৃষ্ণের পট্টমহিষী, শ্রীকৃষ্ণের সহিত তাঁহার ভেদ নাই। তিনি সমস্ত লক্ষ্মী অর্থাৎ কান্তাবর্গ ও মহিষীবর্গের অংশিনী, তাঁহাতে সমস্ত কান্তি বিদ্যমান। তিনি কৃষ্ণের অনুরঞ্জনকারিণী ॥ (ঘ)

**अथ नित्यधामत्वम् आदिशब्दात्, यथा छान्दोग्ये—**

**"स भगवः कस्मिन् प्रतिष्ठितः ॥" इति।**

**"स्वे महिम्नि ॥" इति। (ङ)**

## कान्तिमाला

"नित्यलक्ष्म्यादिमत्त्वा"दित्यत्रादिपदग्राह्यमाह—अथेति। भगवः भगवन् हे सनत्कुमार ! स भूमाख्यो हरिरित्यादि प्रश्नः, स्वे महिम्नीति तदुत्तरम् ॥ (ङ)

### প্রভা

অথেতি। 'নিত্যলক্ষ্ম্যাদিমত্ত্বাচ্চ কৃষ্ণঃ পরতমো মতঃ' ইত্যত্রাদিশব্দেন ধাম্নোঽপি গ্রহণম্। স ইতি। নারদঃ সনৎকুমারমাহ—ভগবঃ ভগবন্! স ভূমা ভূমাখ্যো হরিঃ কস্মিন্ প্রতিষ্ঠিতঃ, তস্যাধারঃ ক ইত্যর্থঃ। ততঃ 'স্বে মহিম্নি' ইতি সনৎকুমারস্য প্রতিবচনম্। স্বে মহিম্নি স্বস্বরূপে ধাম্নি পরাখ্যশক্তিবিজৃম্ভিতে গোলোকাদাবিত্যর্থঃ। বিষ্ণোর্ধাম্নোঽপি নিত্যত্বম্ ॥ (ঙ)

### বঙ্গানুবাদ

'নিত্যলক্ষ্ম্যাদিমত্ত্বাৎ' এই কারিকায় যে আদিপদ আছে, তাহার দ্বারা ধামেরও গ্রহণ করিতে হইবে। ছান্দোগ্যে উক্ত হইয়াছে,—নারদ সনৎকুমারকে বলিলেন—হে ভগবন্! সেই সর্ব্বব্যাপক হরি কোথায় প্রতিষ্ঠিত? সনৎকুমার প্রত্যুত্তর দিলেন—স্বস্বরূপভূত ধামে অর্থাৎ পরাশক্তিবিলসিত গোলোকাদি ধামে অবস্থান করিতেছেন ॥ (ঙ)

**"দিব্যে ব্রহ্মপুরে(১) হ্যেষ সংব্যোম্ন্যাত্মা(২) প্রতিষ্ঠিতঃ ॥"**

**( মুণ্ড° ২।২।৭ ) ইতি। (চ)**

### কান্তিমালা

দিব্য ইতি। পুরে বিচিত্রপ্রাসাদাদিশালিনি ॥ (চ)

### প্রভা

দিব্য ইতি। সংব্যোম্নি আকাশবৎ সর্বগতে দিব্যেঽলৌকিকেঽপ্রাকৃত ইতি যাবৎ। ব্রহ্মপুরে ব্রহ্মণঃ পুরে ভবনে, এষ আত্মা ব্রহ্মাখ্যো হরিঃ প্রতিষ্ঠিতঃ। 'যঃ সর্বজ্ঞঃ সর্ববিদ্ যস্যৈব মহিমা ভুবি' ইতি শ্লোকপূর্বভাগঃ, 'সংব্যোম্নি' ইতি পাঠো ন সার্বত্রিকঃ ॥ (চ)

### বঙ্গানুবাদ

আকাশের ন্যায় সর্ব্বব্যাপক অপ্রাকৃত ব্রহ্মপুরে এই ব্রহ্মাভিধেয় হরি প্রতিষ্ঠিত আছেন ॥ (চ)

---

(১) 'পুরে' ইতি 'ক' 'খ' তথা 'গ' পুস্তকে।

(২) 'সংব্যোম্না' ইতি 'গ' পুস্তকে।

ऋक्षु च—

"ता (१) वां वास्तून्युश्मसि गमध्यै
यत्र गावो भूरिशृङ्गा अयासः।
अत्राह तदुरुगायस्य वृष्णः
परमं पदमवभाति भूरि॥" (ऋग्वेदः १।१५४।६) इति। (छ)

## कान्तिमाला

तामिति। तां तानि, वां युवयो राधिकाकृष्णयोर्वास्तूनि गृहाणि गमध्यै प्राप्तुम् उश्मसि कामयामहे। यत्र येषु गावो भूरिशृङ्गाः प्रशस्तविषाणाः सन्ति। अयासः शुभावहविधिरूपाः, "अयः शुभावहो विधि"रित्यमरः वाञ्छितदात्र इत्यर्थः। अत्रार्थे श्रुतिराह। वृष्णः भक्तेच्छावर्षिणः कृष्णस्य, तत् परमं पदं, भूरि प्रचुरमवभाति, नान्यस्य संख्येत्यर्थः॥ (छ)

## प्रभा

ऋक्षु ऋग्वेदमन्त्रेषु च। हे पत्नीयजमानौ वां युष्मदर्थं ता तानि गन्तव्यत्वेन प्रसिद्धानि वास्तूनि सुखनिवासयोग्यानि स्थानानि गमध्यै युवयोर्गमनाय उश्मसि कामयामहे। तदर्थं विष्णुं प्रार्थयाम इत्यर्थः। तानीत्युक्तं कानीत्याह। यत्र येषु वास्तुषु गावो रश्मयो भूरिशृङ्गा अत्यन्तोन्नत्युपेता बहुभिराश्रयणीया वायासोऽयना गन्तारोऽतिविस्तृताः। यद्वा यासो गन्तारः। अतादृशा अत्यन्तप्रकाशयुक्ता इत्यर्थः। अत्राह अत्र खलु वास्त्वाधारभूते द्युलोक उरुगायस्य बहुभिर्महात्मभिर्गातव्यस्य स्तुत्यस्य कामानां वर्षितुर्विष्णोस्तत् तादृशं सर्वत्र पुराणादिषु गन्तव्यत्वेन प्रसिद्धं परमं निरतिशयं पदं स्थानं भूर्यंति प्रभूतमवभाति। स्वमहिम्ना स्फुरति। अयं मन्त्रो यास्केन गोशब्दो रश्मिवाचक इति व्याचक्षाणेन व्याख्यातः। तानि वां वास्तूनि कामयामहे गमनाय यत्र गावो भूरिशृङ्गा भूरीति बहुनो नामधेयं प्रभवतीति सतः शृङ्गं श्रयतेर्वा शृणातेर्वा शम्नातेर्वा शरणायोद्गतमिति वा शिरसो निर्गतमिति वायासोऽयनाः। तत्र तदुरुगायस्य विष्णोर्महागतेः परमं पदं परार्द्धस्थमवभाति भूरि। पादः पद्यतेः। नि० २।७ इति सायनभाष्यम्।

एतन्मते व्याख्यानं प्रदर्श्यते यथा—ता इति। ता तानि वां युवयो

(१) 'तां' इति पाठः आदर्शपुस्तकचतुष्टये। मूलग्रन्थे 'ता' इति पाठो दृश्यते।

রাধাকৃষ্ণয়োর্বাস্তূনি ধামানি গমধ্যৈ গন্তুমামুমিতি যাবত্। বয়মুশ্মসি কাময়ামহে। যত্র যেষু ধামসু গাবো ভূরিশৃঙ্গাঃ প্রশস্তবিষাণা বিদ্যন্তে। অয়াসঃ অত্যন্তপ্রকাশযুক্তাঃ। অত্রাহ—অত্র খলু দিব্যে স্থানে বৃষ্ণো ভক্তেচ্ছা-বর্ষিণ উরুগায়স্য কৃষ্ণস্য পরমং পদং ভূরি প্রচুরমবভাতি প্রকাশতে॥ (ছ)

বঙ্গানুবাদ

আমরা রাধা-কৃষ্ণের সেই ধামসমূহ পাইবার নিমিত্ত কামনা করিয়া থাকি। যে ধামসমূহে নিরতিশয়প্রকাশসমন্বিত বিশালশৃঙ্গযুক্ত গোসকল বিদ্যমান আছে। এই দিব্য স্থানে ভক্তগণের ইচ্ছামত ফলবর্ষী কৃষ্ণের পরম পদ অতিশয় প্রকাশ পাইতেছেন॥ (ছ)

শ্রীগোপালোপনিষদি চ—

"তাসাং মধ্যে সাক্ষাদ্ ব্রহ্মগোপালপুরী হি॥" (উত্তর০৩৫) ইতি। (জ)

কান্তিমালা

তাসামিতি। সপ্তানাং পুরীণাং মধ্যে, গোপালস্য পুরী মথুরা, সাক্ষাদ্ ব্রহ্ম, তত্পরাখ্য-শক্তিরূপত্বেন তাদ্রূপ্যাদ্ অভিব্যক্তত্বদ্গুণত্বাচ্চ॥ (জ)

প্রভা

শ্রীগোপালোপনিষদি-শ্রীগোপালোত্তরতাপনীয়োপনিষদীত্যর্থঃ।

'অয়োধ্যা মথুরা মায়া কাশী কাঞ্চী অবন্তিকা।

পুরী দ্বারাবতী চৈব সপ্তৈতা মোক্ষদায়িকাঃ॥' ইতি স্মরণাত্,

তাসাং কাশ্যাদীনাং সপ্তানাং মোক্ষপুরীণাং মধ্যে সাক্ষাদ্ ব্রহ্মগোপালপুরী ব্রহ্ম এব গোপালঃ কৃষ্ণস্তস্য পুরী মথুরা হি॥ (জ)

বঙ্গানুবাদ

শ্রীগোপালোত্তরতাপনীয় উপনিষদে উক্ত হইয়াছে যথা,—কাশীপ্রভৃতি সাতটী মোক্ষপুরীর মধ্যে মথুরা হইতেছে ব্রহ্মগোপালপুরী॥ (জ)

জিতন্তে স্তোত্রে চ—

"লোকং বৈকুণ্ঠনামানং দিব্যষাড়্গুণ্যসংযুতম্।

অবৈষ্ণবানামপ্রাপ্যং গুণত্রয়বিবর্জিতম্॥

नित्यसिद्धैः समाकीर्णं तन्मयैः पाञ्चकालिकैः ।
सभाप्रासादसंयुक्तं वनैश्चोपवनैः शुभम् ॥
वापीकूपतड़ागैश्च वृक्षषण्डैः सुमण्डितम् ।
अप्राकृतं सुरैर्वन्द्यमयुतार्कसमप्रभम् ॥" इति । (भ)

## कान्तिमाला

लोकमित्यादि प्रस्फुटार्थम् । पाञ्चकालिकैरिति । अभिगमनोपादानेज्याध्ययनसमाधयः पञ्चकालास्तत्परायणैरित्यर्थः ॥ (भ)

## प्रभा

श्रीनारदपञ्चरात्रे श्रीब्रह्मनारदसंवादे जितंते स्तोत्रे—
'प्रकृष्टसत्त्वशक्तिं त्वां कदा द्रक्ष्यामि चक्षुषा ।
क्रीड़न्तं रमया सार्द्धं लीलाभूमिषु केशवम् ॥' इति

परेणान्वयः । प्रकृष्टसत्त्वशक्तिं सच्चिदानन्दस्वरूपं महापुरुषं रमया स्वरूपशक्त्याख्यया लक्ष्म्या सह लीलाभूमिषु माधुर्यस्थानेषु क्रीड़न्तं केशवं त्वां कदा चक्षुषा द्रक्ष्यामि । लोकमिति । षड् गुणा एव षाड्गुण्यं 'चतुर्वर्णादीनां स्वार्थे' ५।१।१२४ इति वार्तिकोक्त्या ष्यञ् । राज्ञां राज्यरक्षणे षड् उपायाः सन्धि-विग्रह-यानासनद्वैधीभावसमाश्रयाख्याः । दिव्यषाड्गुण्यसंयुतम् अप्राकृतषाड्गुण्यसमेतम् अवैष्णवानां विष्णुभक्तभिन्नानामप्राप्यं, गुणत्रयविवर्जितं सत्त्वादिगुणत्रयरहितं, पाञ्चकालिकैः—अभिगमनोपादानेज्यास्वाध्याययोगाः पञ्चकालाः, तत्र वाक्कायचेतसामवधानपूर्वकं देवतागृहागमनमभिगमनम्, पूजाद्रव्याणामर्जनमुपार्जनम्, इज्या पूजा, स्वाध्यायः—अष्टाक्षरादिमन्त्रजपरूपः, योगः—ध्यानम्, तानाचरद्भिः पाञ्चकालिकैस्तन्मयैः पूर्वोक्ताभिगमनादिपरायणैर्नित्यसिद्धैः शाश्वतसिद्धपुरुषैर्देवयोनिविशेषैर्वा समाकीर्णं समावृतम् । सभाप्रासादसंयुक्तं सभाभिः प्रासादैश्च समेतं, वनैः उपवनैः कृत्रिमैश्च शुभं विराजमानम् । वापीकूपतड़ागैः वृक्षषण्डैस्तरुसमूहैश्च सुमण्डितं शोभनं यथा स्यात् तथा भूषितम् । अप्राकृतसुरैः अप्राकृतैर्नित्यसिद्धैः सुरैर्देवैः वन्द्यं पूज्यम्, अयुतार्कसमप्रभं दशसहस्रसवितृकिरणतुल्यमतीवसमुज्ज्वलमित्यर्थः । अप्रा-

ক্ষতমিতি পাঠে মায়াতীতমিত্যর্থঃ। বৈকুণ্ঠনামানং লোকং, প্রাপ্যেত্যধ্যাহার্য্যং, লোকাভিন্নং কেশবং বা, স্বরূপশক্তিবিলাসত্বেন শ্রীভগবত্তদ্ধাম্নোরভেদোক্তেঃ॥ (ঝ)

বঙ্গানুবাদ

শ্রীনারদপঞ্চরাত্রগ্রন্থে শ্রীব্রহ্মনারদসংবাদে "জিতং তে" এইরূপে যে স্তোত্র আরব্ধ হইয়াছে তাহাতে উক্ত হইয়াছে, যথা—অপ্রাকৃতষড়্‌গুণসমন্বিত, অবৈষ্ণবগণের অপ্রাপ্য, সত্ত্বাদিগুণত্রয়রহিত, অভিগমনাদিপঞ্চকালযুক্ত, অভিগমনাদিপরায়ণ-নিত্যসিদ্ধগণকর্ত্তৃক সমাবৃত, সভা ও প্রাসাদ সংযুক্ত, বন ও উপবনসুশোভিত, জলাশয়, কূপ, তড়াগ ও বৃক্ষসমূহপরিবেষ্টিত, দেবগণেরও বন্দনীয়, অযুতসূর্য্যতুল্যপ্রভাযুক্ত বৈকুণ্ঠ ধাম প্রাপ্ত হইয়া অথবা বৈকুণ্ঠধামের সহিত অভিন্ন সচ্চিদানন্দস্বরূপ, লীলাভূমিতে লক্ষ্মীর সহিত ক্রীড়ায় রত, কেশব তোমাকে কোন্ সময় চক্ষুর দ্বারা দর্শন করিব॥ (ঝ)

ব্রহ্মসংহিতায়াঞ্চ—

"সহস্রপত্রং কমলং গোকুলাখ্যং মহৎপদম্ ।
তৎকর্ণিকারং তদ্ধাম তদনন্তাংশসম্ভবম্ ॥" ৫।২ ইতি । (ঞ)

কান্তিমালা

সহস্রেতি। মহতঃ স্বয়ং ভগবতঃ পদং স্থানং, "পদং ব্যবসিতি-ত্রাণ-স্থান-লক্ষ্মাঙ্ঘ্রি-বস্তুষু" ইত্যমরঃ। অনন্তস্য সংকর্ষণস্যাংশেন সম্ভবঃ প্রাকট্যম্ অনাদিতো যস্য তৎ॥ (ঞ)

প্রভা

ব্যাখ্যাতঞ্চৈতচ্ছ্রীমজ্জীবগোস্বামিভিঃ—'অথ তস্য তদ্রূপতাসাধকং নিত্যং ধাম প্রতিপাদয়তি—সহস্রপত্রং কমলমিত্যাদিনা। সহস্রাণি পত্রাণি যত্র তৎ কমলমিত্যাদিনা 'ভূমিশ্চিন্তামণিগণময়ী'তি বক্ষ্যমাণাচ্চিন্তামণিগণময়ং পদ্মং তদ্রূপং, তচ্চ মহৎ সর্ব্বোৎকৃষ্টং পদং স্থানম্। মহতঃ শ্রীকৃষ্ণস্য মহাভগবতো বা পদং মহাবৈকুণ্ঠরূপমিত্যর্থঃ। তত্তু নানাপ্রকারং শ্রূয়ত ইত্যাশঙ্ক্য প্রকারবিশেষত্বেন নিশ্চিনোতি গোকুলাখ্যমিতি। গোকুলমিত্যাখ্যা রূঢ়ির্যস্য তদ্ গোপাবাসরূপমিত্যর্থঃ। রূঢ়ির্যোগমপহরতীতি ন্যায়েন তস্যৈব প্রতীতিঃ। এতদভিপ্রেত্যোক্তং শ্রীদশমে—'শ্রীভগবান্ গোকুলেশ্বরঃ' ইতি। অত এব তদনুকূলত্বেনোত্তরগ্রন্থোঽপি ব্যাখ্যেয়ঃ। তস্য শ্রীকৃষ্ণস্য ধাম শ্রীনন্দ-

यशोदादिभिः सह वासयोग्य महान्तःपुरम्, तैः सहवासिता त्वग्रे समुद्दिष्यते। तस्य स्वरूपमाह—तदिति। अनन्तस्य श्रीबलदेवस्यांशेन ज्योतिर्विभाग-विशेषेण सम्भवः सदाविर्भावो यस्य तत्। तथा तन्त्रेणैतदपि बोध्यते। अनन्तोऽंशो यस्य तस्य श्रीबलदेवस्यापि सम्भवो निवासो यत्र तदि'ति॥ (ञ)

বঙ্গানুবাদ

ব্রহ্মসংহিতায়ও উক্ত হইয়াছে গোকুলনামক স্থান সহস্রপত্রপদ্মস্বরূপ, তাহা শ্রীকৃষ্ণের সর্ব্বোৎকৃষ্ট স্থান, তাহার মধ্যস্থিত কর্ণিকাররূপ-ধামই ভগবান্, এই স্থান অনন্ত অর্থাৎ বলদেবের অংশ হইতে সম্ভূত॥ (ঞ)

**प्रपञ्चे स्वात्मकं लोकमवतार्य महेश्वरः।**
**आविर्भवति तत्रेति मतं ब्रह्मादिशब्दतः॥१६**
**गोविन्दे सच्चिदानन्दे नरदारकता यथा।**
**अज्ञैर्निरूप्यते तद्वद्धाम्नि प्राकृतता किल॥१७**

कान्तिमाला

ननु महिमादिशब्दवाच्यं हरेः पदं प्रकृतिमण्डलाद्बहिः श्रुतं, तन्मण्डलान्तःस्थं मथुरादि तस्य पदमित्येतत् कथम्? तत्राह प्रपञ्च इति। लोकस्य स्वात्मकत्वे हेतुः—ब्रह्मादिशब्दत इति। आदिना महिमसंव्योमशब्दसंग्रहः। एवं तर्हि मथुरादौ प्राकृतत्वं (२) कुतः स्फुरति तत्राह—गोविन्द इति। नरदारकता प्राकृतमनुष्यबालकता॥१६—१७

प्रभा

ननु मथुरायाः प्रपञ्चान्तर्गतत्वे कथं नित्यत्वमित्यत आह—प्रपञ्च इति। महेश्वरो महान् ईश्वरो भगवान् श्रीकृष्णः प्रपञ्चे जगति स्वात्मकं लोकं स्वस्वरूपं धाम स्थानमवतार्याविर्भाव्य तत्र धाम्नि स्वयमाविर्भवति। 'आविर्भावा तिरोभावा स्वपदे तिष्ठति' इति गोपालोत्तरतापनीये। व्याख्यातञ्च श्रीमज्जीवेन। 'या तु कदाचिदाविर्भावा जगत्यवतीर्णा, कदाचित्तिरोभावा ततोऽन्तर्हिता च भवति, सैव स्वपदे गोलोकाख्ये वृन्दावनस्यैव प्रकाशविशेषे निजधाम्नि तिष्ठति। अत्रेयमेव स्वपदे तिष्ठतीत्युक्ते तस्या एव तथा स्फूर्तिः

(२) 'प्राकृतत्वे' इति 'ग' पुस्तके।

পূর্ণাপ্রকাশত্বস্বেত্যর্থঃ ইতি বিদুষাং মতম্। কুত ইত্যত আহ—ব্রহ্মাদিশব্দতঃ। মথুরায়া ব্রহ্মাদিশব্দেনাঽভেদেনাভিহিতত্বাৎ। যতঃ—'তাসাং মধ্যে সাক্ষাদ্-ব্রহ্মগোপালপুরী হি' ইতি গোপালোত্তরতাপনীয়শ্রুতৌ মথুরা ব্রহ্মশব্দেনাভিহিতা।

'মথ্যতে তু জগৎ সর্বং ব্রহ্মজ্ঞানেন যেন বা।
তৎসারভূতং যদ্ যস্যাং মথুরা সা নিগদ্যতে ॥' (৭৪)

ইতি শ্রুতৌ চ মথুরাপদনিরুক্ত্যা ব্রহ্মাভিন্নত্বেন মথুরাস্বরূপং প্রদর্শিতম্। অতো ব্রহ্মণো নিত্যত্বাত্তদভিন্নস্য ধাম্নোঽপি নিত্যত্বং বক্তব্যম্, তথা সতি তস্যোৎপত্তিস্তু বক্তুং ন শক্যতে, অপি ত্বাবির্ভাবঃ। তর্হি মথুরায়াঃ প্রাকৃতত্বং কথমিতি চেৎ? ভ্রান্ত্যা ইত্যুত্তরং ব্রূমঃ। যথাঽজ্ঞৈস্তত্ত্বজ্ঞানহীনৈঃ পুরুষৈঃ সচ্চিদানন্দে গোবিন্দে নরদারকতা প্রাকৃতমনুষ্যবালকতা নিরূপ্যতে, তদ্বদ্ ধাম্নি তৎস্থানে প্রাকৃততা, কিল অলীকে ॥ ১৬—১৭

## বঙ্গানুবাদ

ভগবান্ শ্রীকৃষ্ণ প্রপঞ্চে নিজস্বরূপভূত স্থানের প্রকাশ করিয়া তাহাতে স্বয়ং আবির্ভূত হইয়া থাকেন, ইহা তত্ত্ববিদ্‌গণের সম্মত। কারণ গোপালোত্তর-তাপনীয় উপনিষদে ব্রহ্মশব্দের দ্বারা অভেদে মথুরাপুরী উক্ত হইয়াছে। যেমন অজ্ঞ মনুষ্যেরা সচ্চিদানন্দস্বরূপ গোবিন্দকে সাধারণ মনুষ্যবালক বলিয়া নিশ্চয় করে, সেইরূপ তাঁহার ধামকেও প্রাকৃত বলিয়া থাকে ॥ ১৬—১৭

## অথ নিত্যলীলত্বম্।

তথাহি শ্রুতিঃ—

"যদ্ভূতং (১) ভবচ্চ ভবিষ্যচ্চ ॥" (বৃহ০ ৩।৮।৩) ইতি। (ক)

## কান্তিমালা

অথেতি। যদিতি বৃহদারণ্যকে। যদ্ভূতং ব্রহ্মনিষ্ঠং গুণকর্ম নিত্যং, গত-ভবদ্-ভবিষ্যচ্ছব্দৈস্তস্য ত্রৈকালিকত্বপ্রত্যয়াৎ ॥ (ক)

---

(১) 'যদ্ ভূতং,' ইতি মূলপুস্তকে।

प्रभा

यदिति। यद् ब्रह्म गतं भूतं, भवद् वर्तमानं च, भविष्यच्च। कालत्रयेऽपि विद्यमानमित्यर्थः॥ (क)

বঙ্গানুবাদ

যিনি অতীত, বর্ত্তমান ও ভবিষ্যতে বিদ্যমান॥ (ক)

"एको देवो नित्यलीलानुरक्तो
भक्तव्यापी भक्तहृद्यन्तरात्मा॥" (ख)

कान्तिमाला

एको देव इति पिप्पलादशाखायाम्। अत्र लीलायाः नित्यत्वं (१) वाचनिकम्॥ (ख)

प्रभा

एकोऽद्वितीयो देवो हरिर्नित्यलीलानुरक्तः। नित्यलीला नाम नित्यधाम्नो नित्यक्रिया। सा च द्विविधा प्रकटाऽप्रकटभेदेन। अस्या विवृतिः श्रीकृष्णसन्दर्भे द्रष्टव्या। भक्तान् व्याप्नोतीति भक्तव्यापी। भक्तानां हृदयाख्यां परमाम्निस्वरूपपरमात्मा॥ (ख)

বঙ্গানুবাদ

অদ্বিতীয় দেবতা নিত্য লীলাতে অনুরক্ত, যিনি ভক্তসমূহকে ব্যাপিয়া আছেন এবং যিনি ভক্তগণের হৃদয়ের অন্তরাত্মস্বরূপ॥ (খ)

स्मृतिश्च—
"जन्म कर्म च मे दिव्यमेवं यो वेत्ति तत्त्वतः।
त्यक्त्वा देहं पुनर्जन्म नैति मामेति सोऽर्जुन॥" ४।९ इति। (ग)

कान्तिमाला

जन्मेति। श्रीगीतासु। दिव्यमप्राकृतं नित्यमिति यावत्॥ (ग)

प्रभा

व्याख्यातश्चैतद् ग्रन्थकृता—जन्मेति। मम सर्वेश्वरस्य सत्येच्छस्य वैदुर्यवन्नित्यसिद्धनृसिंहरघुनाथादिबहुरूपस्य तत्र तल्लोकलक्षणं जन्म तथा कर्म च

(१) 'लीलानित्यत्वम्' इति 'ग' पुस्तके।

तत्तद्भक्तसम्बन्धं चरितं तदुभयं दिव्यमप्राकृतं नित्यं भवतीत्येवमेवैतदिति यस्तत्त्वतो वेत्ति 'यद्‌ गतं भवच्च भविष्यच्च', 'एको देवो नित्यलीलानुरक्तो भक्तव्यापी भक्तहृदयान्तराले'ति श्रुत्या दिव्यमिति मदुक्त्या च दृढश्रद्धो युक्तिनिरपेक्षः सन् हे अर्जुन ! स वर्तमानं देहं त्यक्त्वा पुनः प्रापञ्चिकं जन्म नैति। किन्तु मामेव तत्तत्कर्ममनोज्ञमेति मुक्तो भवतीत्यर्थः। यद्वा मोचकत्वलिङ्गेन तत्त्वमसीति श्रुतेश्च मे जन्मकर्मणी तत्त्वतो ब्रह्मत्वेन यो वेत्तीति व्याख्येयम्। अन्यथा 'तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यते अयनाय' इति श्रुतिर्व्याक्रुध्येत्। समानमन्यत्। जन्मादिनित्यतायां युक्तयस्त्वन्यत्र विस्तृता द्रष्टव्याः॥ (ग)

বঙ্গানুবাদ

হে অর্জ্জুন! যিনি আমার দিব্য জন্ম ও কর্ম্ম যথার্থভাবে অবগত আছেন, তিনি এই দেহ ত্যাগ করিয়া আর জন্ম গ্রহণ করেন না, আমাকেই প্রাপ্ত হইয়া থাকেন॥ (গ)

**रूपानन्त्याज्जनानन्त्याद्धामानन्त्याच्च कर्म तत्।**
**नित्यं स्यात्तदभेदाच्चेत्युदितं तत्त्ववित्तमैः॥१८**

**इति प्रमेयरत्नावल्यां भगवत्-पारतम्यप्रकरणं नाम**
**प्रथमप्रमेयम्॥ १**

**कान्तिमाला**

ननु लीलाया नित्यत्वं शब्दात् प्रतीतं, युक्तिविरहात्तदपुष्टमिति चेत्तत्राह—रूपानन्त्यादिति। अयमाहुः—लीलायाः क्रियात्वात् प्रत्यवयवमप्यारम्भसमाप्तिभ्यां तस्याः सिद्धिर्वाच्या,ताभ्यां विना न तस्याः स्वरूपं सिध्येत्। तथा चारम्भसमाप्तिमत्तया विनाशित्वध्रौव्यात् कथं सा नित्येति चेत्? उच्यते। परात्मनः (२) सदैवाकारानन्त्यात् पार्षदानन्त्यात् स्थानानन्त्याच्च नानित्यत्वं तस्याः, तत्तदाकारगतयोस्तत्तदारम्भसमाप्त्योः सत्त्वेऽप्येकत्रैकत्र तत्तत्क्रियावयवा यावत् समाप्यन्ते न समाप्यन्ते वा, तावदेवान्यत्रान्यत्राप्यारब्धाः स्युरित्येवमविच्छेदान्नित्यत्वं सिद्धम्। ननु मास्तु विच्छेदः, पृथगारम्भादन्यैव सेति चेत्? उच्यते। समयभेदेनाभ्युदितानामप्येकरूपाणां क्रियाणामैक्यम्। यथा चोक्तं 'द्विःपाकोऽनेन कृतो न तु द्वौ पाका'विति, 'द्विर्गोशब्दोऽयमुच्चा-

(२) 'परमात्मनः' इति 'ग' तथा 'घ' पुस्तके।

रितो न तु द्वौ गोशब्दा'विति प्रतीतिनिर्णीतशब्दैक्यवदिदं द्रष्टव्यम्। तदेतदाह—तद-भेदाच्चेति। तेषां रूपादीनां चतुर्णां भेदविरहादित्यर्थः ॥१८

इति प्रमेयरत्नावल्यां भगवत्पारतम्यप्रकरणं व्याख्यातम् ॥१

## प्रभा

ननु सन्तु भगवति विचित्रा लीलास्तत्तद्देशादिसम्बन्धा नित्यास्तु ता न स्युरारम्भपरिसमाप्तिभ्यामिति तार्किकाः प्रत्यवतिष्ठन्ते, तत्र समादधति—रूपेति। रूपानन्त्याद् भगवति सदैवाकारानन्तत्वात्। भगवदाकारानन्त्य-ञ्चोक्तं श्रीगोपालपूर्वतापनीयोपनिषदि—'एकोऽपि सन् बहुधा यो विभाति' इति। 'एकाऽनेकस्वरूपाय' १।२।३ इति विष्णुपुराणात्, 'बहुमूर्त्येकमूर्तिकम्' १०।४०।७ इति श्रीभागवतवचनाच्च। जनानन्त्यात् जनानामनन्तब्रह्माण्डा-नन्तवैकुण्ठगतानां तत्तत्पार्षदानां व्यक्तिप्रकाशानन्त्यात्। धामानन्त्यात्—तत्तल्लीलास्थानानामानन्त्याच्च तत्कर्म लीलारूपं नित्यं स्यात्। एवमेवोक्तं श्रीभगवत्सन्दर्भे श्रीमज्जीवगोस्वामिपादैः—'ननु कथं जन्मकर्मणोर्नित्यत्वं ते हि क्रिये, क्रियात्वञ्च प्रतिनिजांशमप्यारम्भपरिसमाप्तिभ्यामेव सिध्यतीति ते विना स्वरूपहान्यापत्तिः। नैष दोषः, श्रीभगवति सदैवाकारानन्त्यात् प्रकाशानन्त्याज्जन्मकर्मलक्षणतत्तल्लीलापरिकराणां व्यक्तिप्रकाशयोरानन्त्याच्च, यत एवं सत्योरपि तत्तदाकारप्रकाशगतयोस्तदारम्भसमाप्त्योरेकत्रैकत्र ते जन्म-कर्मणोरंशा यावत् समाप्यन्ते न समाप्यन्ते वा तावदेवान्यत्रान्यत्राप्यारब्धा भवन्तीत्येवं श्रीभगवति विच्छेदाभावात्, नित्ये एव ते जन्मकर्मणी वर्तेते। तत्र ते क्वचित् किञ्चिद्विलक्षणत्वेनारभ्येते, ते क्वचिदैक्यरूप्येण चेति ज्ञेयम्। विशे-षणभेदाद् विशेषणैक्याच्च एक एवाकारः प्रकाशभेदेन पृथक्क्रियास्पदं भव-तीति 'चित्रं बतैतदेकेन वपुषा युगपत् पृथक्' इत्यादौ प्रतिपादितम्। ततः क्रियाभेदात् तत्तत्क्रियात्मकेषु प्रकाशभेदेष्वभिमानभेदश्च गम्यते। तथा सत्येकत्रैकत्र लीलाक्रमजनितरसोद्बोधश्च जायते। नन्वस्त्वविच्छेदः, कथं सा वर्तेत इत्युच्यते पृथगारम्भादिवैरसेति चेत्? उच्यते—यथा शाङ्करशारीरके—'कालभेदेनोदितानामपि समानरूपाणां क्रियाणामेकरूपत्वमिति। द्विर्गोशब्दोऽयमुच्चारितो न तु द्वौ गोशब्दाविति प्रतीतिनिर्णीतं शब्दैकत्वमिति। ततो जन्मकर्मणोर्नित्यता युक्ता। अत एवागमादावपि भूतपूर्वं लीलोपासन-

विधानं युक्तं, तथा चोक्तं मध्वभाष्ये—'परमात्मसम्बन्धित्वेन नित्यत्वात् त्रिविक्रमत्वादिष्वप्युपसंहार्यत्वं युज्यत इति। अनुमतञ्चैतच्छ्रुत्या 'यद्गतं भवच्च भविष्यच्च' इति।' अत्रोपसंहार्यत्वं नामोपासनायामुपादेयत्वमित्यर्थः। तत्र तस्य जन्मनः प्राकृतात्तस्माद्विलक्षणत्वं प्राकृतजन्मानुकरणेनाविर्भावमात्रत्वं, क्वचित्तदननुकरणेन वा। 'अजायमानो बहुधा विजायत' इति श्रुतेः।

'देवक्यां देवरूपिण्यां विष्णुः सर्वगुहाशयः।
आविरासीद् यथा प्राच्यां दिशीन्दुरिव पुष्कलः॥' १०।३।८ इति।
'सत्यं विधातुं निजभृत्यभाषितं
व्याप्तिञ्च भूतेष्वखिलेषु चात्मनः।
अदृश्यतात्यद्भुतरूपमुद्वहन्
स्तम्भे सभायां न मृगं न मानुषम्॥' इति श्रीभागवतवचनाभ्याञ्च।

तथा कर्मणो वैलक्षण्यं स्वरूपानन्दविलासमात्रत्वं, तद् यथा 'लोकवत्तु लीलाकैवल्यम्'। २।१।३३ इति। व्याख्यातञ्च मध्वाचार्य्यैः—'यथा लोके मत्तस्य सुखोद्रेकादेव नृत्यादिलीला, न तु प्रयोजनापेक्षया एवमेवेश्वरस्य।

नारायणसंहितायाञ्च—

'सृष्ट्यादिकं हरिर्नैव प्रयोजनमपेक्ष्य तु।
कुरुते केवलानन्दाद् यथा मत्तस्य नर्त्तनम्॥
पूर्णानन्दस्य तस्येह प्रयोजनमतिः कुतः।
मुक्ता अप्याप्तकामाः स्युः किमुतास्याखिलात्मनः॥' इति।

न चोन्मत्तदृष्टान्तेनासर्वज्ञत्वमपि प्रसञ्जयितव्यं, स्वरूपानन्दोद्रेकेण स्वप्रयोजनमननुसन्धायैव लीलायते, इत्येतदंशेनैव स्वीकारात्। उच्छ्वासप्रश्वासदृष्टान्तेऽपि सुषुप्त्यादौ तद्दोषापातात्। तस्मात् स्वरूपानन्दस्वाभाविक्येव तल्लीला, तदभेदादिति। तदभेदात् तेषां स्वरूपशक्तिविलसितानां रूपादीनां शक्तित्वेन परस्परमभेदादिति तत्त्ववित्तमैर्ब्रह्मनारदादिभिरुदितम्॥ १८

बङ्गानुवाद

শ্রীভগবানের আকারের অনন্তত্বহেতু, লীলাস্থানস্থিত পার্ষদগণের আনন্ত্যহেতু, লীলাস্থানের অনন্তত্বহেতু এবং রূপাদির পরস্পর অভিন্নতানিবন্ধন শ্রীভগবল্লীলারূপ কর্ম্ম নিত্য, ইহা ব্রহ্ম-নারদাদি তত্ত্বদর্শিগণ বলিয়াছেন॥ ১৮

## द्वितीयप्रमेयम्

### अखिलाम्नायवेद्यत्वप्रकरणम् ।

अथाखिलाम्नायवेद्यत्वं, यथा श्रीगोपालोपनिषदि—

"योऽसौ सर्वैर्वेदैर्गीयते ॥" ( उत्तरतापनीय २७ ) इति । (क)

### कान्तिमाला

सर्ववेदबोध्यत्वं हरेर्वक्तुमाह—अथेति । योऽसाविति । यः श्रीगोपालः कृष्णः ॥ (क)

### प्रभा

य इति । योऽसौ भगवान् श्रीकृष्णाख्यं परब्रह्म सर्वैर्मन्त्रब्राह्मणात्मकैर्वेदैर्गीयते साक्षात् परम्परया प्रतिपाद्यते । 'योऽसौ सर्वैर्वेदैर्गीयते' इत्यपि पाठः क्वचिद् दृश्यते ॥ (क)

### বঙ্গানুবাদ

শ্রীগোপালতাপনীয়োপনিষদে উক্ত হইয়াছে—সমস্ত বেদ সাক্ষাৎ অথবা পরম্পরায় পরব্রহ্মস্বরূপ ভগবান্ শ্রীকৃষ্ণকে প্রতিপাদন করিয়া থাকে ॥ (ক)

काठके च—

"सर्वे वेदा यत् पदमामनन्ति
तपांसि सर्वाणि च यद्वदन्ति ॥" १।२।१५ इति । (ख)

### कान्तिमाला

सर्वे इति । यत्पदं यद् ब्रह्माख्यं वस्तु, 'पदं व्यवसितित्राणे'त्याद्युक्तेः ॥ (ख)

### प्रभा

सर्वे इति । सर्वे वेदा ऋगादयः, यत्पदं यस्य स्वरूपम् आमनन्ति मुख्यया वृत्त्या बोधयन्ति । यत्प्रीत्यर्थं सर्वाणि च तपांसि कर्माणि वदन्ति सर्वेषां तपसां फलं तदेव ब्रह्मेत्यर्थः । 'यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत् ते पदं संग्रहेण ब्रवीम्योमित्येतत्' इत्यपरोऽंशः ॥ (ख)

বঙ্গানুবাদ

কঠোপনিষদে কথিত হইয়াছে—সমস্ত বেদ মুখ্যভাবে যাঁহার স্বরূপ প্রতিপাদন করে, যাঁহার প্রীতির নিমিত্ত সমস্ত কর্ম্ম—এই কথা পণ্ডিতেরা বলিয়া থাকেন ॥ (খ)

**श्रीहरिवंशे च—**

**"वेदे रामायणे चैव पुराणे भारते (१) तथा ।**

**आदावन्ते च मध्ये च हरिः सर्वत्र गीयते ॥" इति । (ग)**

**कान्तिमाला**

वेदे रामायणे इति स्फुटार्थम् (२) ॥ (ग)

**प्रभा**

वेद इति । वेदे सर्वेषु वेदेषु रामायणे पुराणे सर्वेषु पुराणेषु तथा भारते महाभारते, उपलक्षणञ्चैतत् सर्वेषु शास्त्रेष्वित्यर्थः । आदौ उपक्रमे, अन्ते उपसंहारे, मध्ये च सर्वत्र हरिः गीयते, सर्वेषां शास्त्राणां प्रतिपाद्यो हरिरेव । एवमेवोक्तं श्रीमज्जीवगोस्वामिपादैः—'तदेतत् सर्वशास्त्राणां समन्वयस्तस्मिन्नेव भगवति । तथा च—सर्वैश्च वेदैः परमो हि देवो जिज्ञास्यो नान्यो वेदैः प्रसिध्येत् । तस्मादेनं सर्ववेदानधीत्य विचार्य च ज्ञातुमिच्छेन्मुमुक्षु'रिति चतुर्वेदशाखायाम् । 'यं सर्वदेवा आनमन्ति मुमुक्षवो ब्रह्मवादिनश्च'ेति श्रीनृसिंहतापन्याम् । सर्वे वेदा यत् पदमामनन्ति तपांसि सर्वाणि च यद्वदन्ति', 'नावेदविन्मनुते तं बृहन्तं', 'सर्वानुभूतमात्मानं साम्पराये', 'तं त्वौपनिषदं पुरुषं पृच्छामी'त्यादिरन्यत्र । 'वेदैश्च सर्वैरहमेव वेद्यो वेदान्तकृद्वेदविदेव चाह'मिति श्रीगीतोपनिषत्सु । सिद्धान्ते पुन'रेक एव भगवान् विष्णुः समस्तागमव्यापारेषु विवेचनव्यतिकरं नीतेषु निश्चीयते' इति पाद्मे, 'सर्वनामाभिधेयश्च सर्ववेदेड़ितश्च सः' इति स्कान्दे । 'न ताः स्म सर्वजगतां वचसां प्रतिष्ठा यत्र शाश्वती'ति वैष्णवे ।

---

(१) 'भागवते' इति 'ग' पुस्तके ।

(२) 'स्फुटार्थः' इति 'घ' पुस्तके ।

'सर्ववेदान् सेतिहासान् सपुराणान् सयुक्तिकान्।
सपञ्चरात्रान् विज्ञाय विष्णुर्ज्ञेयो न चान्यथा ॥' इति ब्रह्मतर्के।

तदेवं सर्ववेदसमन्वयं स्वस्मिन् श्रीभगवत्यैव स्वयमाह—मां विधत्तेऽभिधत्ते मां विकल्प्यापोह्यते ह्यहम् (भा० ११।२१।४३) इति। मामेव यज्ञपुरुषं विधत्ते श्रुतिः, मामेव तत्तद्देवतारूपमभिधत्ते। यच्चाकाशादिप्रपञ्चजातं 'तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः' इत्यादिना विकल्प्यापोह्यते तदप्यहमेव न मत्तः पृथगस्ति सर्वस्य मदात्मकत्वादिति भावः' ॥ (ग)

বঙ্গানুবাদ

সমস্ত বেদ, রামায়ণ, পুরাণ, মহাভারত এমন কি সমস্ত শাস্ত্রে উপক্রম, উপসংহার ও মধ্যে সর্ব্বত্র ভগবান্ শ্রীহরিই প্রতিপাদিত হইয়া থাকেন ॥ (গ)

**साक्षात्-परम्पराभ्यां वेदा गायन्ति माधवं सर्वे।**
**वेदान्ताः किल साक्षादपरे तेभ्यः परम्परया ॥ १**

## कान्तिमाला

(१) ननु वेदेषु कर्मप्रतिपादनं भूरि दृष्टं, कथमुक्तोदाहरणानि संगच्छेरन् इति चेत्? तत्राह—साक्षादिति। वेदान्ताः साक्षान्माधवं गायन्ति, तेभ्योऽपरे वेदाः कर्मकाण्डानि तु परम्परया, तज्ज्ञानाङ्गहृद्विशुद्धिकरकर्मविधानपरीपाट्येति(१) सर्ववेदवेद्यत्वं हरेः सूपपन्नम् ॥१

## प्रभा

साक्षादिति। सर्वे वेदाः साक्षात् परम्परया च माधवं श्रीहरिं गायन्ति प्रतिपादयन्ति। तेभ्यस्तेषु वाक्येषु मध्ये वेदान्ता उपनिषद्भागाः साक्षात् प्रत्यक्षेण श्रीहरिं प्रतिपादयन्ति, किल निश्चये। अपरे कर्मकाण्डात्मका वेदाः परम्परया चित्तशुद्धिद्वारा। सर्वेषां वेदानां साक्षात् परम्परया च प्रतिपाद्यः श्रीहरिरेव ॥ १

বঙ্গানুবাদ

সমস্ত বেদ সাক্ষাৎ বা পরম্পরায় ভগবান্ শ্রীহরিকে প্রতিপাদন করিয়া থাকে। তন্মধ্যে বেদান্ত সাক্ষাৎ শ্রীহরিকে প্রতিপাদন করে, এবং কর্ম্মকাণ্ডরূপ

(१) 'तत्त्वज्ञानाङ्गहृदयशुद्धिकरधर्म-इति 'ग' पुस्तके।

বেদভাগ চিত্তশুদ্ধিদ্বারা পরম্পরাক্রমে ভগবান্ শ্রীহরিকে প্রতিপাদন করিয়া থাকে ॥ ১

**क्वचित् क्वचिदवाच्यत्वं यद्वेदेषु विलोक्यते।**
**कार्त्स्न्येन वाच्यं न भवेदिति स्यात्तत्र सङ्गतिः।**
**अन्यथा तु तदारम्भो व्यर्थः स्यादिति मे मतिः॥२**

## कान्तिमाला

ननु 'यतो वाचो निवर्तन्ते' (तैत्तिरीय० २।४।१, २।९।१) इत्यादौ हरेर्वेदावाच्यत्वं दृष्टं, तत्र का गतिरिति चेत्तत्राह—क्वचिदिति। दृष्टोऽपि भेदः कार्त्स्न्येनादर्शनाददृष्टो यथोच्यते तद्वत्। अन्यथा सर्वथा तदवाच्यत्वे तज्ज्ञानाय वेदाध्ययनारम्भो निरर्थकः स्यात्॥२

## प्रभा

क्वचिदिति। ननु यदि सर्वेषां वेदानां प्रतिपाद्यो हरिरेव तर्हि 'यतो वाचो निवर्तन्ते' इत्यादीनां श्रुतीनाम् अप्रामाण्यं प्रसज्येतेत्यत आह— क्वचिदिति। वेदेषु क्वचित् कस्मिंश्चित् स्थले यद् ब्रह्मणोऽवाच्यत्वं वागविषयत्वं विलोक्यते तेषां वेदवाक्यानामेतदेव तात्पर्यं यत् कार्त्स्न्येन कृत्स्नतया सम्पूर्णतयेत्यर्थः, तद् ब्रह्म वाच्यं न भवेदिति तत्र वेदवाक्ये सङ्गतिः। अन्यथा यदि सर्वथा ब्रह्मणो वागविषयत्वमुच्यते तर्हि तु तदारम्भः ब्रह्मज्ञानाय वेदपाठारम्भो व्यर्थः स्यादिति मे मतिः। अतो हरेर्वेदवाच्यत्वं वक्तव्यं, न लक्ष्यत्वम्। तदुक्तं ग्रन्थकृता भाष्यपीठके चतुर्थपादे—'ननु विष्णुरेव तद्वाच्यत्वे तु 'यतो वाचो निवर्तन्ते, अप्राप्य मनसा सह।' 'यद्वाचानभ्युदितं येन वागभ्युद्यते तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते। यत् श्रोत्रेण न शृणोति येन श्रोत्रमिदं श्रुतं तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते' इत्यादिश्रुतेः।

'यतोऽप्राप्य निवर्तन्ते वाचश्च मनसा सह।
अहं चान्ये इमे देवास्तस्मै भगवते नमः॥'

इत्यादि स्मृतेश्च का गतिरिति चेत्? न, साकल्यावाच्यतया तद्गतेर्दर्शयिष्यमानत्वात्। सर्वज्ञादयः शब्दाः सार्वज्ञ्यादिना निमित्तेन भगवति प्रवर्तन्ते, निर्गुणादयस्तु नैर्गुण्यादिनेति कृत्स्नस्य वेदस्य भगवत्परत्वम्। इत्यञ्च सर्वं

वेदा यत्पदमामनन्तीत्यादिश्रुतिस्मृत्यविरोधः। तदिदं शुद्धस्य पूर्णस्य विष्णोर्वेदवाच्यत्वं भगवता सूत्रकारेणोक्तम् 'ईक्षतेर्नाशब्दम्' इत्यस्मिन्नधिकरणे। वेदेषु वाच्यत्वदर्शनादशब्दं ब्रह्म न भवति, किन्तु शब्दवाच्यमेव भवतीति भाषितञ्च। यत्त्वशब्दमिति प्रधानं व्यपष्ठ, तन्न। तस्या'प्यजामेकामि'त्यादिशब्दवाच्यत्वात्।. किञ्च ज्ञानकाण्डं साक्षादेव ब्रह्म प्राह। 'तन्त्वौपनिषदं पुरुषं पृच्छामी'ति श्रुतेः। कर्मकाण्डन्तु ज्ञानाङ्गप्रतिपादनात् परम्परयेति। 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेने'ति श्रुतेः।

'यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम्।
स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः॥' इति स्मृतेश्च।

ननु वृष्टिपुत्रस्वर्गादिफलकानि कर्माणि विदधानोऽसौ प्रतीयते, मैवं, तथा तद्विधानस्य प्ररोचनाजनकत्वात् कारीर्यादिफलस्य वृष्ट्यादेर्दृष्टत्वेन वेदे सश्रद्धस्य तदभिरुच्या तदर्थं सम्यग् विचारयतो 'यो वा एतदक्षरमविदित्वा गार्ग्यस्माल्लोकात् प्रैति स कृपणः' इत्यब्रह्मज्ञस्य दैन्यं 'तमेतं वेदानुवचनेने'त्यादिना कर्मणां तज्ज्ञानाजनकताञ्च विजानतो निष्कामानि तान्यनुतिष्ठतो ब्रह्मधिषणामसौ जनयतीति सिद्धं तस्य सर्वस्य तत्परत्वम्। यदुक्तं—

'परोक्षवादो वेदोऽयं बालानामनुशासनम्।
कर्ममोक्षाय कर्माणि विधत्ते ह्यगदं यथा॥' (भा॰ ১১।৩।৪৪)।
'वेदोक्तमेव कुर्वाणो निःसङ्गोऽर्पितमीश्वरे।
नैष्कर्म्यं लभते सिद्धिं रोचनार्था फलश्रुतिः॥' (भा॰ ১১।৩।৪৬) इति

कामितस्यैव स्वर्गादेः फलत्वेन प्रतीतेरकामितोऽसौ न भवेत्, किन्तु चित्तशुद्धिरेव ज्ञानोदयार्था भवेदि'ति॥ २

বঙ্গানুবাদ

বেদের কোন কোন স্থলে দৃষ্ট হয়—ব্রহ্ম অবাচ্য অর্থাৎ শব্দের অবিষয়। কিন্তু সেই বেদবাক্যের তাৎপর্য্য এই যে, বেদ সম্পূর্ণরূপে ব্রহ্মকে বর্ণনা করিতে পারে না। যদি এইরূপে বেদবাক্যের সঙ্গতি না করিয়া সম্পূর্ণরূপে ব্রহ্ম শব্দের বিষয় নহে—ইহা বলা যায়, তাহা হইলে ব্রহ্মজ্ঞানের নিমিত্ত বেদাধ্যয়ন ব্যর্থ হয়, ইহা আমি মনে করি॥ ২

शब्दप्रवृत्तिहेतूनां जात्यादीनामभावतः।
ब्रह्म निर्धर्मकं वाच्यं नैवेत्याहुर्विपश्चितः॥ ३
सर्वैः शब्दैरवाच्ये तु लक्षणा न भवेदतः।
लक्ष्यञ्च न भवेद् धर्महीनं ब्रह्मेति मे मतम्॥ ४

इति प्रमेयरत्नावल्यां द्वितीयप्रमेयम्॥२

## कान्तिमाला

शब्देति। निर्विशेषब्रह्मवादिनान्तु ब्रह्मणि जातिगुणक्रियासंज्ञानामभावात्तद्वाचिभिर्वेदशब्दैर्न तद्वाच्यम्॥ ३

ननु (१) लक्षणया वेदशब्दानां तत्र प्रवृत्तेर्न तदारम्भो व्यर्थः इति चेत्? तत्राह—सर्वैरिति। सर्वशब्दावाच्यं ब्रह्म त्वया स्वीकृतम्। तत्र लक्षणा न सम्भवेत्, 'सोऽयं देवदत्तः' इत्यत्र पिण्डशब्दवाच्ये पिण्डे भागलक्षणा दृष्टा॥४

इति प्रमेयरत्नावल्यां हरेर्वेदवेद्यत्वप्रकरणं व्याख्यातम्॥ २

## प्रभा

शब्देति। 'शब्देरेव प्रतीयन्ते जातिद्रव्यगुणक्रियाः। चातुर्विध्यादमीषान्तु शब्द उक्तश्चतुर्विधः॥' इति वचनाद् यत् किञ्चित् शब्दप्रतिपाद्यं तदेतदन्यतमं स्यात्, ब्रह्मणि तु तदभावान्न तच्छब्दप्रतिपाद्यमिति निर्विशेषब्रह्मवादिनां शङ्करभगवत्पूज्यपादानां मतमाह—शब्देति। शब्दप्रवृत्तिहेतूनां शब्दव्यापारकारणभूतानां जात्यादीनां जातिगुणक्रियाद्रव्याणामभावतोऽभावेन निर्धर्मकं धर्मरहितं ब्रह्म वाच्यं शब्दप्रतिपाद्यं नैव भवेत्, इति विपश्चितः पण्डिता आहुः। आहुरित्यनेन परमतं प्रदर्श्य स्वमतमाह—सर्वैरिति। सर्वैः शब्दैरवाच्ये सर्वशब्दाविषयीभूते वस्तुनि यतो लक्षणा न भवेदतो धर्महीनं ब्रह्म लक्ष्यं लक्षणाविषयीभूतं न भवेदिति मे मतम्। इदमत्राकूतं—यस्य हि वाच्यत्वमस्ति तस्य कुत्रचित् तात्पर्यानुपपत्तितो लक्षणा भवेत्, सर्वथा शब्दाविषयीभूते वस्तुनि वाच्यत्वाभावाल्लक्ष्यत्वमपि न सम्भवति। ब्रह्म

(१) 'ननु' इति पाठः 'घ' पुस्तके।

चेच्छब्दवाच्यं न भवेल्लक्ष्यं कथमपि भवितुं नार्हतीति बोद्धव्यम्। तदुक्तं ग्रन्थकृता पीठकभाष्ये प्रथमपादे—

'न च विज्ञानत्वादिधर्मविशिष्टाभिधायिभिर्विज्ञानादिशब्दैर्विशिष्टमभिधेयं शुद्धमखण्डन्तु लक्ष्यमिति वाच्यम्। सर्वशब्दानभिधेयस्य तस्य लक्ष्यत्वायोगात्। तथापि 'तत्त्वमसी'त्यत्र शोधितात् पदार्थाद् वाक्यार्थस्यैक्यस्य भेदो भेदाभेदो वा तव नाभिमतः। तथा सत्यैक्यस्य मिथ्यात्वाद्यापत्तेः। तत्र चेद्विशेषो न स्यात् तर्हि कथं स्वप्रकाशचित्प्रकाशेऽप्यैक्यस्याप्रकाशः, चित्प्रकाशस्य भेदभ्रमविरोधित्वेऽपि तदभिन्नैक्यप्रकाशस्य तद्विरोधश्चेति। तस्मादवश्यमभ्युपेयो विशेषः'॥

'सत्यपि चित्प्रकाशे भेदभ्रमो न निवर्त्तते, अतः स न विरोधी, ऐक्यप्रकाशे जाते भेदभ्रमो विनिवर्त्तते, अतः स तद्विरोधीति निर्भेदेऽपि तत्त्वे भेदकार्यं वदतस्ते विशेषो गले निपतित इति भावः। तस्मादिति। नाप्यनुमेय एव विशेषः।

'अव्यक्तबुद्ध्यहङ्कारमनोभूतेन्द्रियाणि च।
तन्मात्राणि विशेषश्च तस्मै तत्त्वात्मने नमः॥' इति

भीष्मस्तवराजवचनेनापि सिद्धेः'॥ ३-४

## বঙ্গানুবাদ

জাতি, গুণ, ক্রিয়া ও দ্রব্য এই চারিটী শব্দপ্রবৃত্তির কারণ অর্থাৎ যেটী শব্দজ্ঞানের বিষয় হইবে, তাহা এই চারিটীর অন্যতম হওয়া চাই। কিন্তু ব্রহ্মে কোন ধর্ম্ম না থাকায় ব্রহ্ম শব্দশক্তির বিষয় নহেন, ইহা পণ্ডিতগণ বলিয়া থাকেন। ব্রহ্ম সকল শব্দের অবাচ্য, অতএব লক্ষ্য হইতে পারেন না। কারণ ধর্ম্মহীন ব্রহ্ম লক্ষ্য হইতে পারেন না, ইহাই আমার অভিমত॥ ৩—৪

## तृतीयप्रमेयम्

विश्वसत्यत्वप्रकरणम् ।

अथ विश्वसत्यत्वम् ।

**स्वशक्त्या सृष्टवान् विष्णुर्यथार्थं सर्ववित्जगत् ।**
**इत्युक्तेः सत्यमेवैतद्वैराग्यार्थमसद्वचः ॥ १**

### कान्तिमाला

प्रपञ्चसत्यत्वं वक्तुमाह—अथेत्यादिना । स्वशक्त्येति । ननु "तस्मादिदं जगदशेषमसत्-स्वरूपम्" ( भागवत १०।१४।२२ ) इत्यादिवाक्यं जगत्सत्यत्ववादिनां कथं सङ्गच्छेत ? तत्राह—वैराग्यार्थमिति । अनित्यजगत्सुखतृष्णापरित्यागार्थमेव, न तु तन्मृषात्वार्थं, तत्-सत्यत्वे प्रमाणलाभादिति भावः ॥ १

### प्रभा

स्वशक्त्येति । इदानीं प्रपञ्चसत्यत्वं प्रतिपादयति—स्वशक्त्येति । सर्ववित् विष्णुर्हरिः स्वशक्त्या वहिरङ्गाख्यया मायया यथार्थं सत्यं जगत् सृष्टवान्, इति उक्तेः कथनात् एतज्जगत् सत्यमेव । कथं तर्हि श्रुतिस्मृतिपुराणादिषु कुत्रचित् प्रपञ्चासत्त्वमुच्यते, तत्राह—वैराग्यार्थमिति । वैराग्यार्थं विषयेषु विरक्तिजन-नार्थम् । वैराग्यं नाम प्रपञ्चवस्तुनासक्तिः । असद्वचः—विश्वमसत् मिथ्येति वाक्यमुपपद्यते । सतो भगवतः प्रसृष्टत्वन्मिथ्या जगदुत्पत्तुं नार्हति, तथापि यत् श्रुत्यादिषु तस्यासत्त्वमुद्गीयते न तत्र तात्पर्यं, प्रपञ्चमिथ्यात्व-कथनेन तत्र वैराग्यं जायेत, तथा सति परमार्थभूते ब्रह्मणि मतिर्भवेदिति ॥ १

### বঙ্গানুবাদ

সর্ব্বজ্ঞ ভগবান্ স্বকীয় বহিরঙ্গশক্তি মায়ার দ্বারা সত্য জগৎ সৃষ্টি করিয়াছেন, এইরূপ উক্তি থাকায় এই জগৎ সত্যই। শাস্ত্রে কোন কোন স্থানে যে বিশ্বকে মিথ্যা বলা হইয়াছে, তাহা কেবল তাহাতে বৈরাগ্য উৎপাদনের নিমিত্ত, বস্তুতঃ জগৎ মিথ্যা নহে ॥ ১

तथाहि, श्वेताश्वतरोपनिषदि—

"य एकोऽवर्णो बहुधा शक्तियोगाद्

वर्णाननेकान्निहितार्थो दधाति" ॥ (४।१) इति। (क)

## कान्तिमाला

स्वशक्त्यैवैतत् प्रमाणयति—य इति। य ईश्वरः स्वयमवर्णः ब्राह्मणादिभिन्न, स्वशक्तियोगादनेकान् ब्राह्मणादीन् वर्णान् दधाति उत्पादयतीत्यर्थः। "वर्णो द्विजादौ शुक्लादौ स्तुतौ रूपयशोऽक्षरे" इति विश्वः। यद्वा स्वयम् अवर्णः रूपरहितोऽनेकान् शुक्लादीन् अर्थान्, निहितार्थः चेतसि धृतप्रयोजनः ॥ (क)

## प्रभा

यः परमेश्वरः एकोऽद्वितीयः स्वगतसजातीयविजातीयभेदरहित इत्यर्थः, अवर्णो ब्राह्मणादिवर्णभिन्नः प्राकृतरूपरहितो वा, बहुधा नाना शक्तियोगात् निहितार्थः गृहीतप्रयोजनः अनेकान् बहून् वर्णान् ब्राह्मणादीन् शुक्लादीन् वा विदधाति सृजति। 'वि चैति चान्ते विश्वमादौ स देवः स नो बुद्ध्या शुभया संयुनक्तु' इति श्रुत्यंशः ॥ (क)

## বঙ্গানুবাদ

শ্বেতাশ্বতর-উপনিষদে উক্ত হইয়াছে,—যিনি অদ্বিতীয়, ব্রাহ্মণাদি বা শুক্লাদিবর্ণরহিত, যিনি প্রয়োজনবশতঃ বিবিধশক্তির সহিত সম্বন্ধহেতু অনেক বর্ণের সৃষ্টি করিয়া থাকেন॥ (ক)

শ্রীবিষ্ণুপুরাণে চ—

"একদেশস্থিতস্যাগ্নের্জ্যোৎস্না বিস্তারিণী যথা।

পরস্য ব্রহ্মণঃ শক্তিস্তথেদমখিলং জগৎ ॥" (১।২২।৫৮) ইতি।(খ)

## कान्तिमाला

एकदेशेति। परमव्योमनिलयस्य हरेः शक्तिकार्यमेतत्, तदतिदूरम् इदं परिदृश्यमानं जगदिति समुदायार्थः ॥ (ख)

## प्रभा

व्याख्यातञ्चैतत् स्वामिभिः—'नन्वक्षरस्य परब्रह्मणस्तद्विलक्षणं जगत् कथं स्यादित्याशङ्क्य दृष्टान्तेनोपपादयति—एकदेशेति। एकदेश...

স্থিতস্যাগ্নের্দীপাদেরেকস্থাপি তদ্বিস্তারা জ্যোৎস্না প্রভা যথা তৎপ্রকাশ-বিস্তারস্তথা ব্রহ্মণঃ শক্তিকৃতবিস্তার ইদমখিলং জগদি'তি ॥ (খ)

### বঙ্গানুবাদ

বিষ্ণুপুরাণে উক্ত হইয়াছে—যেমন প্রদেশস্থ দীপাদি অগ্নির প্রভা বিস্তৃতভাবে পতিত হয়, সেইরূপ এই সমস্ত জগৎ পর ব্রহ্মের শক্তির বিস্তার ॥ (খ)

ঈশাবাস্যোপনিষদি—

"স পর্যগাচ্ছুক্রমকায়মব্রণ-
মস্নাবিরং (১) শুদ্ধমপাপবিদ্ধম্।
কবির্মনীষী পরিভূঃ স্বয়ম্ভূ-
র্যাথাতথ্যতোঽর্থান্ ব্যদধাচ্ছাশ্বতীভ্যঃ সমাভ্যঃ ॥" (৮) ইতি। (গ)

### কান্তিমালা

যথা মিলিত সর্বাবদিতি চ প্রমাণয়তি—স পর্যগাদিতি। স প্রকৃতঃ পরমাত্মা পর্যগাৎ সর্বং ব্যাপ (২) শুক্রমিত্যাদ্যাঃ শব্দাঃ পুংস্ত্বেন বিপরিণম্যাঃ, স ইত্যুপক্রমাৎ, শুক্রো দীপ্তিমান্, অকায়োঽস্নাবির ইতি সূক্ষ্মস্থূলদেহশূন্যঃ, অব্রণঃ অক্ষতঃ—বিনাশশূন্যঃ, শুদ্ধঃ রাগাদ্যনাবিলঃ, অপাপবিদ্ধঃ কর্মশূন্যঃ, কবিঃ সর্বজ্ঞঃ মনীষী চতুরঃ পরিভূঃ মায়াভিভবী, (৩) স্বয়ম্ভূঃ নির্হেতুকঃ, যাথাতথ্যতঃ সত্যং, 'ঋতং সত্যং সাক্ষাৎ সম্যক্ তথ্যং যথাতথম্' ইতি হলায়ুধঃ। অর্থান্ মহদাদীন্, সমাভ্যঃ (৪) সর্বসরান্ ব্যাপ্য, "সংবৎসরো বৎসরোঽব্দো হায়নোঽস্ত্রী শরৎ সমাঃ" ইত্যমরঃ ॥ (গ)

### প্রভা

স ইতি। স প্রকৃতঃ পুরুষোত্তমঃ পর্যগাৎ পরিতোঽগাৎ সমন্তাদ্ ব্যাপ্তবান্, শুক্রং শুচং বহতি ত্যজতীতি শুক্রং, শুক্রমিতি পুংস্ত্বেন বিপরিণামঃ কার্যঃ, এবং সর্বত্র। অকায়ম্ অকায়ঃ সূক্ষ্মদেহরহিতঃ, অব্রণম্ অক্ষতঃ পূর্ণ ইত্যর্থঃ, অস্নাবিরঃ স্থূলদেহরহিতঃ, শুদ্ধঃ নির্মলঃ, অপাপবিদ্ধঃ নিষ্পাপঃ ধর্মাধর্ম

(১) 'অস্থাবিরং'—ইতি আদর্শপুস্তকীয় পাঠ
(২) 'ব্যাপ্য' ইতি 'গ' পুস্তকে
(৩) 'মায়াদ্যভিভবী' ইতি 'ঘ' পুস্তকে
(৪) 'সমাভ্যঃ' ইতি 'ঘ' পুস্তকে।

রহিত ইত্যর্থঃ। কবিঃ সর্ব্বজ্ঞঃ, মনীষী ঈশিতা, পরিভূঃ সর্ব্বশ্রেষ্ঠঃ, স্বয়ম্ভূঃ সর্ব্বাশ্রয়ো নির্হেতুক ইত্যর্থঃ। শাশ্বতীভ্যঃ সমাভ্যঃ শাশ্বতীঃ সমাঃ বৎসরান্ ব্যাপ্য যাথাতথ্যতঃ সত্যান্ অর্থান্ বিষয়ান্ ব্যদধাৎ সসর্জ্জ ॥ (গ)

বঙ্গানুবাদ

ঈশাবাস্য-উপনিষদে উক্ত হইয়াছে—ভগবান্ সর্ব্বব্যাপী, শোকরহিত, সূক্ষ্মশরীরশূন্য, পূর্ণ, স্থূলশরীররহিত, পবিত্র, ধর্ম্মাধর্ম্মশূন্য, সর্ব্বজ্ঞ, সর্ব্বশ্রেষ্ঠ, সর্ব্বাশ্রয় ; তিনি বহুবর্ষ ব্যাপিয়া সত্য বিষয়সমূহের সৃষ্টি করিয়াছেন ॥ (গ)

শ্রীবিষ্ণুপুরাণে চ—

"তদেতদক্ষয়ং (১) নিত্যং জগন্মুনিবরাখিলম্।

আবির্ভাবতিরোভাবজন্মনাশবিকল্পবৎ ॥" (১।২২।৫৮) ইতি। (ঘ)

কান্তিমালা

তদেতদিতি। এতদীশ্বরজীবপ্রকৃতিরূপম্ অখিলং জগৎ, হে মুনিবর! অক্ষয়ং নিত্যং, প্রকৃতিজীবরূপমক্ষয়ং স্বরূপেণ ক্ষয়রহিতং পরিণামীত্যর্থঃ। প্রকৃতের্মহদাদিতয়া জীবস্য চ জ্ঞানবিকাশেন পরিণামঃ, ঈশ্বররূপন্তু নিত্যং কূটস্থম্। এতদেবাহ—আবির্ভাবেতি। ঈশ্বরাংশ অবির্ভাবতিরোভাববান্ প্রকৃতিজীবরূপোঽংশস্তু জন্মনাশবানিতি বা (২) পাঠক্রমমনাদৃত্য অর্থক্রমাদ্ ব্যাখ্যাতম্। "পূর্ব্বং হি,

"দ্বে রূপে ব্রহ্মণস্তস্য মূর্ত্তঞ্চামূর্ত্তমেব চ।

ক্ষরাক্ষরস্বরূপে তে সর্ব্বভূতেষ্ববস্থিতে ॥

অক্ষরং তৎ পরং ব্রহ্ম ক্ষরং সর্ব্বমিদং জগৎ ॥" (বিষ্ণুপুরাণম্ ১।২২।৫৩)

ইত্যুক্ত্বা, তন্মধ্যে 'ব্রহ্মবিষ্ণুশিবরূপাণি' (বিষ্ণু পু, ১।১১।৫৬) (৩) পঠিত্বা, তদনন্তরং 'তদেতদি'তি পঠিতম্ ॥ (ঘ)

প্রভা

তদেতদিতি। নন্বিন্দ্রজালবত্ত্বেতজ্জগদিতি তদ্ ভ্রান্তমিদমিত্যাশয়েনাহ—তদেতদিতি। হে মুনিবর! এতদখিলং জগৎ অক্ষয়ং নিত্যঞ্চ। জগৎ-সৃষ্টিং প্রতি স্বরূপশক্তিসহায়স্য ঈশ্বরস্য নিমিত্তত্বং জীবপ্রকৃত্যোশ্চোপাদানত্বম্।

---

(১) 'তদেতদক্ষরম' ইতি 'গ' পুস্তকে।

(২) 'স্বরূপেণাক্ষয়োঽপি কার্য্যদ্বারা জন্মনাশভেদবান্' ইতি 'গ' পুস্তকে।

(৩) 'ব্রহ্ম-বিষ্ণু-শিবা ব্রহ্মন্' ইতি 'গ' পুস্তকে।

